# त्यागभोगसमन्वयः

**न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम्।**
**कामये दुःखतप्तानां प्राणिनाम् आर्तिनाशनम्।।**

राज्ञः रन्तिदेवस्य भक्त्या सन्तुष्टः भगवान्– "भवान् किम् इच्छति? राज्यं वा? ऐश्वर्यं वा? स्वर्गं वा? मोक्षं वा?" इति पृष्टवान्। तदा रन्तिदेवः उक्तवान्– "अहं राज्यम् ऐश्वर्यं वा न इच्छामि। यतः तानि भोगसाधनानि अशाश्वतानि। स्वर्गं मोक्षं वापि न इच्छामि। यतः तदुभयम् अपि मम एकस्य सम्बन्धि। अहं तु सर्वेषां हितम् इच्छामि। अतः समस्तस्य लोकस्य कष्टानि यथा अपगच्छेयुः तथा वरेण अनुगृहणातु" · इति। परहितचिन्तनस्य अपूर्वम् उदाहरणम् एतत्। लोकहितं चिन्तयन् सः सर्वस्य अपि त्यागे सिद्धः जातः। एतेन त्यागेन तस्य कः लाभः?- कोऽपि। प्रतिफलनिरपेक्षः त्यागः सः।

किन्तु इदानीन्तनकाले? त्यागः भोगसम्पादकः संवृत्तः। कश्चन चिन्तकः विमर्शकः एतद्विषये वदति– "इदानीं देशे 'त्याग-भोग-समन्वयः' प्रचलति। त्यागभोगसमन्वयः नाम पूर्वं कृतस्य त्यागस्य समानतया, चक्रवृद्धिसहितं वा भोगस्य अनुभोगः" इति।

सः एव विमर्शकः अग्रे विशदीकरोति– "एकादशीनिमित्तं ये उपवासं न कृतवन्तः ते द्वादशीपायसं पातुम् अनर्हाः इति वयं भावयामः। अतः एकादशीनिमित्तं ये आहारत्यागं कुर्वन्ति ते सर्वे द्वादशीपायसस्य चिन्तनं कर्तुम् आरभन्ते। एतावदेव न, ये द्वादशीपायसम् इच्छन्ति तैः एकादशीनिमित्तकः उपवासः सप्रमाणं प्रस्तुतीकरणीयः भवति। एतत्परिणामतः वस्तुतः देवप्रीत्यर्थं ये उपवासम् आचरन्ति ते अपि द्वादशीप्रसादवितरणनिमित्तके कोलाहले बुभुक्षां सोढुम् अशक्ताः सन्तः त्यागभोगसमन्वयम् आचरन्ति" इति।

'मा फलेषु कदाचन' इति तत्त्वम् उपदेशे केवलं श्रूयते, न तु आचारे। भोगापेक्षया त्यागः। कदाचित् विना श्रमं भोगप्राप्तये अकृतस्य अपि त्यागस्य सप्रमाणं प्रस्तुतीकरणम्! अहो! कालगतिः चित्रा!!

# शब्दस्य अन्तरङ्गम्

शिष्यः – श्रीमन्! नूतनशब्दनिर्माणविषये भवता एतावता बाह्यं स्वरूपम् उक्तम्। तस्य आन्तरङ्गिकं स्वरूपं किं भवेत् इति जिज्ञासुः अहम्।

आचार्यः– तन्नाम ...?

शि –तन्नाम, अकारान्तः भवेत् इत्यादिकं वदता भवता निर्मितः शब्दः कथं भवेत् इति सूचितम्। शब्दस्वीकारे के अंशाः मनसि स्थापनीयाः इति....।

आ – तत्र किं भोः? प्रवृत्तिनिमित्तम् अवलोकनीयम्।

शि –प्रवृत्तिनिमित्तम् इति? तस्य कः अर्थः? अहं तु बालः....।

आ – इतरभाषायां तस्य शब्दस्य स्वीकारे किं कारणम् आसीत् इति परिशीलनीयम्।

शि –उदाहरणार्थम्?

आ – शरीरशब्दम् एव पश्यतु। शरीरशब्दस्य व्युत्पत्तिः शीर्यते इति। प्रतिक्षणं नश्यति इत्यर्थः। अस्माकं भारतीयानां दृष्ट्या आत्मा शाश्वतिकः, शरीरं तु क्षणिकम्, अशाश्वतं च। अतः शरीरशब्दः स्वीकृतः। एवं सर्वेषाम् अपि शब्दानां प्रायशः काऽपि व्युत्पत्तिः भवति। तां परिशील्य तदनुगुणम् इतरभाषासु अपि शब्दः निर्मातव्यः।

शि –सर्वासु भाषासु एवं व्युत्पत्तिः भवति वा? उदाहरणार्थम आंग्लभाषायाम...?

आ – सामान्यतः सर्वासु भाषासु व्युत्पत्तिः भवति एव। आंग्लभाषायाम् अपि व्युत्पत्तिक्रमः अस्ति एव। आंग्लभाषायां बहवः शब्दाः ग्रीक् ल्याटिन् इत्यादिभाषाभ्यः आगताः। अतः मूलानुगुणं तत्रापि व्युत्पत्तिः भवेत् एव।

शि –आचार्य! कदाचित् एवं भवति – व्युत्पत्तिः अन्या एव भवति, रूढिः च अन्यार्थे दृश्यते। तदा?

आ – आं, तदा व्युत्पत्तिम् आधारीकृत्य शब्दं निर्मातुं न शक्नुमः वयम्। रूढ्यर्थः एव प्रबलः खलु व्यवहारे?

शि – तदा किं करणीयम् इति?

आ – तदेव वक्तुम् आरब्धवान् आसम् अहम्। तादृशे सन्दर्भे तस्य वस्तुनः उपयोगम्, आकारं, गुणं वा आधारीकृत्य शब्दः निर्मातव्यः भवेत्।

शि – एतद्विषये कानिचन उदाहरणानि?

आ – Vanity Bag इति शब्दः अस्ति। व्युत्पत्त्यनुगुणं गर्वस्यूतः इति वक्तव्यं भवेत्। तस्मिन् शब्दे न औचित्यं, न वा सौन्दर्यम्। अतः 'वनितास्यूतः' इति शब्दः चिन्तितः। एतस्मिन् शब्दे, सौन्दर्यं दृश्यते, वकारादिसाम्यं चापि अस्ति। औचित्यं च स्फुटम्। एषः शब्दः तद्वाच्यवस्तुनः उपयोगं परिशील्य निश्चितः।

अन्यं शब्दं पश्यतु – Chewing Gum इति अस्ति। कश्चित् सहृदयः चर्वणकम् इति शब्दम् एतदर्थं सूचितवान्। अत्र वस्तुनः गुणः चिन्तितः।

Credit Bill इति शब्दः अस्ति। Bill इत्यस्य देयकम् इति सामान्यः शब्दः। यत्र धनं न आगतं भवति तादृशे सन्दर्भे Credit Bill दीयते। अतः केनचित् निर्मितम् ऋणदेयकम् इति। स्वीकारार्हता अस्ति अत्र। अत्र तेन स्वरूपं चिन्तितम्।

एवं च शब्दनिर्माणे, सूक्ष्मावलोकनं, शुद्धं चिन्तनं, सहृदयता च नितराम् अपेक्षितं भवति।

शि – अन्यः अंशोऽपि मम मनसि भाति। शब्दनिर्माणसन्दर्भे एव तत्सम्बन्धिसूक्ष्मभेदाः अपि पूर्वम् एव चिन्तनीयाः।

आ – आम्। तादृशः शब्दः एव स्वीकरणीयः, यत्र अवान्तरभेदोऽपि कल्पयितुम् शक्यः स्यात्। अत्र अस्माकम् एव अनुभवः एवम् अस्ति। Bus-stand इत्येतदर्थं वयं 'निःस्थानम्' इति शब्दं स्वीकृतवन्तः, यतः तादृशः प्रयोगः अन्यत्र दृष्टः आसीत्। किन्तु कदाचित् एकेन पृष्टं – 'Bus-stop इत्येतदर्थं कः शब्दः?' इति। तत्काले वयं निरुत्तरा एव। कालान्तरे 'स्थानकम्' इति शब्दः महाराष्ट्रे व्यवह्रियमाणः दृष्टः। अतः इदानीं वयं निःस्थानम् – Bus-stand, स्थानकम् – Bus stop इति भेदं वदामः।



# चन्दमामा

एप्रिल्-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

इतरभाषासु इव संस्कृते अपि बालरूपकाणि, नूतनतन्त्र -प्रधानानि प्रौढरूपकाणि च इदानीं दृश्यन्ते। किन्तु एतानि संस्कृत-रूपकलक्षणानुगुणं न भवन्ति। एवं तर्हि एतादृशानां रूपकाणाम् उपादेयता उत त्यागः?

लक्ष्यैकतात्पर्याणि लक्षणानि। लक्षणग्रन्थे न प्रस्तुतम् इति कारणतः लक्ष्यग्रन्थस्य उपेक्षा कथं वा भवितुम् अर्हति ? लक्ष्यानि दृष्टानि चेत् तदनुगुणं लक्षणं निर्मातव्यम्।

काले काले समाजस्य रुचिः विपरिवर्तते। अतः एव दशवर्षेभयः पूर्वं जनप्रियतां गतः साहित्यप्रकारः इदानीं तथा न स्यात्। अन्यसाहित्यप्रभावः, नूतनाविष्कारः इत्यादयः समाजस्य रुचिं परिवर्तयन्ति। यथा लोकरुचिः तथा हि साहित्यसृष्टिः। अतः साहित्यसृष्टिः लक्षणैः बद्धुं न शक्यते। न कोऽपि कविः लक्षणग्रन्थं पुरतः संस्थाप्य काव्यरूपकादिकं लिखति। प्रतिभा यथा स्फुरति प्रेरयति च तथा ग्रन्थान् रचयति सः। अतः कालानुगुणं लक्षणग्रन्थेषु परिवर्तनम् आनेतव्यम्!

लक्षणग्रन्थे न उक्तम् इति कारणतः कोऽपि साहित्यप्रकारः तिरस्कृतः न भवेत्। शिष्टानुमतः साहित्यप्रकारः लोके दृष्टः चेत् तदनुगणं लक्षणनिर्माणम् उचितः मार्गः।

सम्पुटः-४ एप्रिल् - ८७ सञ्चिका - १

प्रतिकृतिमूल्यं रू.२-५० * वार्षिकं ग्राहकशुल्कं रू.३०-००

रसप्रश्नाः

# महापुरुषाणां मूलनाम

(अधः केचन महापुरुषाः निर्दिष्टाः सन्ति। तेषां मूलनाम अन्यदेव आसीत्। तान्यपि पार्श्वे लिखितानि सन्ति। प्रसिद्धपुरुषस्य नाम, तदीयं बाल्यनाम च परस्परं योजयन्तु।)

| | |
|---|---|
| १. स्वामी विवेकानन्दः | १. पुरन्दरः |
| २. रामकृष्ण परमहंसः | २. वर्धमानः |
| ३. तुलसीदासः | ३. मनु (छबीली) |
| ४. आद्यशङ्कराचार्यः | ४. नरेन्द्रनाथ दत्तः |
| ५. अमात्यराक्षसः | ५. विनायकः |
| ६. महावीरः तीर्थङ्करः | ६. देवव्रतः |
| ७. झाँसी राज्ञी लक्ष्मीबाई | ७. गदाधरः |
| ८. महात्मा गान्धी | ८. रामबोला |
| ९. विद्यारण्यः | ९. मेघनादः |
| १०. भीष्मः | १०. शङ्करः |
| ११. विश्वामित्रः | ११. सिद्धार्थः |
| १२. इन्द्रजित् (रावणस्य पुत्रः) | १२. माधवः |
| १३. गौतमबुद्धः | १३. मोहनदासः |
| १४. इन्द्रः (वर्तमानकालीनः) | १४. सुबुद्धिः |
| १५. वीर सारवकरः | १५. कौशिकः |

उत्तराणि–

१.-४, २.-७, ३.-८, ४.-१०, ५.-१४, ६.-२, ७.-३, ८.-१३, ९.-१२, १०.-६ ११.-१५, १२.-९, १३.-११, १४.-१, १५.-५.

## रसवार्ता:



### पुनः अपि "हिममानवः!"

'येति' नामकं हिमामानवम् आधारीकृत्य अनेकाः कथाः बहोः कालतः श्रूयमाणाः सन्ति, यस्य च हिममानवस्य शरीरं रोमभिः पूर्णम् इति कथ्यते। किन्तु एतं कोऽपि प्रत्यक्षं न दृष्टवान्। इटलीदेशीयः रीन् होल्ड् मेन्नर् नामकः पर्वतारोही "टिबेट्पर्वतश्रेण्यां मया हिममानवः दृष्टः" इति कथयति। एतम् अधिकृत्य इतोऽपि अंशान् सङ्ग्रहीतुं सः उद्युक्तः अस्ति।

### पाम्पेनगरस्य वैभवम्



इटलीदेशस्थः वेसुवियस्पर्वतः क्रि.श. ७९ तमे वत्सरे यदा उध्वस्तः अभवत् तदा पाम्पेनगरम् अपि धूलिसात् जातम्। सद्यःकालीनैः संशोधनैः ज्ञातं यत् वयं यावत् तर्कितवन्तः ततोऽपि समम्पन्नम् आसीत् तत् नगरम् इति। अत्यमूल्यैः मणिमाणिक्याभिः निबद्धानाम् आभरणादीनां निर्माणस्थानम् अपि तत्र आसीत् इति श्रूयते।



### सर्वप्रथमा वैद्या

प्रपञ्चे एव सर्वप्रथमं काचित् महिला वैद्यकीयपदवीं भारते एव प्राप्तवती इति वार्ता पि.टि.ऐ. संस्थया प्रकाशिता अस्ति। "मिस् मेरी षेर्लिफ्महोदयायाः प्रवेशः लण्डन् वैद्यीकयमहाविद्यालयेन निराकृतः अभवत्। तदा सा १८७५ तमे वत्सरे मद्रासनगरे वैद्यकीयमहाविद्यालयं प्रविष्टवती। चतुर्णां वर्षाणाम् अनन्तरं वैद्यकीयपदवीं प्राप्तवती च" इति भारतीय वैद्यसंस्थायाः अध्यक्षः डा।। वि. परमेश्वरमहोदयः सूचितवान्।

# मयूरध्वजः

मणिपुराधीशः मयूरध्वजः अश्वमेधयागं कर्तुम् इच्छन् यागाश्वं विसृष्टवान्। तदीयः पुत्रः ताम्रध्वजः सेनया सह तम् अश्वम् अनुसृतवान्। तस्मिन् एव समये धर्मराजः अपि अश्वमेधयागार्थम् उद्युक्तः आसीत्। तदीयम् अश्वं कृष्णार्जुनौ अनुसृतवन्तौ आस्ताम्। ताम्रध्वजः धर्मराजस्य यागाश्वं निगृह्य रहसि बन्धने स्थापितवान्।

'कथञ्चित् यागाश्वः प्राप्तव्यः' इति विचिन्त्य कृष्णार्जुनौ ब्राह्मणवेषेण मयूरध्वजस्य आस्थानं गतवन्तौ। मयूरध्वजः भक्त्या तौ सत्कृत्य आगमनकारणं पृष्टवान्। तदा ब्राह्मणवेषधारी कृष्णः– "राजन्! आवयोः अरण्यप्रवाससन्दर्भे कश्चन सिंहः आगत्य मम पुत्रम् अगृहणात्। पुत्रविमोचनार्थम् अहं तं बहुधा प्रार्थितवान्। 'एतद्देशस्य महाराजस्य शरीरार्धं यदि आनीय दीयेत तर्हि भवतः पुत्रं विमुञ्चामि' इति अवदत् सः सिंहः" इति उक्तवान्।

तदा मयूरध्वजस्य पत्नी– "अहं महाराजस्य अर्धाङ्गिनी अस्मि। अतः मम शरीरं सिंहाय अर्पयन्तु। मम पतिं त्यजन्तु" इति प्रार्थितवती।

"भवत्याः वचनं स्वीकारार्हम् एव। किन्तु पत्नी पत्युः वामभागायते। सिंहः तु दक्षिणभागम् अपेक्षते" इति उक्तवान् ब्राहमणवेषधारी कृष्णः।

तदा राजा– "ब्राहमणोत्तम! भवतः इष्टानुसारम् एव भवतु। मम दक्षिणार्धं स्वीकृत्य भवतः पुत्रस्य विमोचनं साधयतु" इति सूचितवान्। तस्य शरीरस्य विभागसन्दर्भे वामनेत्रतः अश्रुबिन्दूनि पतितानि। तत् दृष्ट्वा वेषधारी कृष्णः उक्तवान्– "रोदनपूर्वकं दत्तं दानं न स्वीकुर्मः वयम्" इति।

तदा मयूरध्वजः– "भोः, उदारकार्ये उपयुज्यमानस्य दक्षिणार्धस्य यत् भाग्यं तत् मम नास्ति किल इति चिन्तयतः वामभागस्य नेत्रतः अश्रूणि आगतानि। अन्यत् अर्धं गच्छति इति तस्य दुःखं नास्ति एव" इति उक्तवान्।

एतेन उत्तरेण सन्तुष्टः कृष्णः राजानम् आलिङ्ग्य आत्मनः निजरूपं प्रदर्शयन् आशिषा अनुगृहीतवान्। आत्मानं कृतार्थं मन्यमानः मयूरध्वजः स्वयागसमाप्तेः अनन्तरं धर्मराजस्य यागाश्वं स्वयं नीत्वा समर्पितवान्।





# नित्यसन्तुष्टः

पूर्वं सोमशेखरः नाम राजा आसीत्। सः अपेक्षितम् अनपेक्षितम् इत्यादिकम् आलोचयन् सदा चिन्ताकुलः भवति स्म।

एकदा सोमशेखरराजः मृगयार्थम् अरण्यं गतवान्। बहुकालम् अटनानन्तरम् अपि सः मृगयार्हम् एकं प्राणिनम् अपि न दृष्टवान्। अतः चिन्ताक्रान्तः सः राजभवनं प्रत्यागतवान्।

सोमशेखरस्य मन्त्री धर्मनन्दनः वयोवृद्धः ज्ञानवृद्धः च। सः महाराजस्य चिन्ताकुलं मुखं दृष्ट्वा एव कारणं ज्ञात्वा उक्तवान्– "महाराज! मृगया नाम कश्चन मनोविनोदः। व्याधादयः तु आहारनिमित्तं मृगयार्थं गच्छन्ति। प्राणिनः अलाभात् तादृशाः यदि खिन्नाः भवेयुः तर्हि तत्र युक्तता अस्ति। मृगया अपि विहारस्य एकम् अङ्गं किल भवतः? अतः प्राणिनः अलाभात् किमर्थं दुःखम्? अरण्ये सन्तोषेण यः सञ्चारः कृतः तस्य रसम् आस्वादयतु। तेन भवतः चिन्ता दूरं गमिष्यति" इति।

एतेन वचनेन महाराजस्य चिन्ता न दूरं गता। अनन्तरदिने अपि मनसः समतोलनं तेन न प्राप्तम्। भोजनार्थम् अपि सः अन्यमनस्कः सन् एव राज्ञ्या सह उपविष्टवान्। भोजने अपि तस्य असन्तृप्तिः एव। भोजनं कुर्वन् सः सुवर्णस्थालिकायां परिविष्टं व्यञ्जनं किञ्चिदिव आस्वाद्य "अत्र लवणम् एव नास्ति" इति वदन् असमाधानेन स्थालिकां दूरे अपसार्य उत्थितवान्।

राज्ञी तु– "प्रभो! एकं व्यञ्जनम् रुचिकरं न स्यात्। इतोऽपि दशविधानि व्यञ्जनानि सिद्धानि सन्ति खलु। तेषां रुचिम् आस्वादयतु। तानि रुचिकराणि सन्ति एव। किमर्थम् असमाधानम्?" इति।

सोमशेखरः तु उत्तरं किमपि न यच्छन् मौनं हस्तं प्रक्षाल्य ततः निर्गतवान् एव।

एवं स्थिते एकदा मन्त्री धर्मनन्दनः



महाराजम् उक्तवान्– "महाराज! अस्माकं नगरप्रान्तं कश्चन महायोगीश्वरः आगतवान् इति श्रुतम्। तं वयं पश्यामः चेत् वरं भवेत् इति मम विचारः। तेन भवतः चिन्ता अपि परिहृता भवेत्" इति।

राजा एतत् अङ्गीकृतवान्। अनन्तरं राजा मन्त्री च तस्य योगीश्वरस्य दर्शनार्थं गतवन्तौ।

सोमशेखरः योगीश्वरं साष्टाङ्गं नमस्कृत्य उक्तवान्– "महात्मन्! अहम् एतस्य देशस्य राजा सोमशेखरः। अनुकूलकरी पत्नी अस्ति मम। कोषागारे धनस्य अपि न अभावः। तथापि काऽपि चिन्ता, कोऽपि खेदः। सन्तोषेण स्थातुम् एव न शक्नोमि। अत्र कारणं किमिति न जानामि। सर्वदा सन्तोषेण स्थातुं मया किं करणीयम् इति कृपया उपदिशतु" इति।

योगीश्वरः मन्दहासं प्रकटयन्– "राजन्! भवतः समस्या मया ज्ञाता। तस्याः निवारणे न तथा क्लेशः। भवान् नित्यसन्तुष्टस्य कस्यचित् हस्ते स्थितम् अङ्गुलीयकं सम्पादयतु। तत् यदि धरेत् तर्हि भवतः सर्वाः चिन्ताः अपगताः भवन्ति। भवान् अपि सदा सन्तोषेण स्थातुं शक्ष्यति" इति।

योगीश्वरस्य मार्गदर्शकसूचनाम् अङ्गीकृत्य सोमशेखरः स्वप्रासादं प्रत्यागतवान्। अनन्तरदिने वेषान्तरं धृत्वा अश्वम् आरुह्य नित्यसन्तोषिणः अन्वेषणार्थं प्रस्थितः च।

एवं गच्छन् सः एकत्र हसन्तं सन्तोषपरवशम् एकं पुरुषं दृष्टवान्। 'एषः सदासन्तुष्टः स्यात्' इति चिन्तितवान् राजा।

अतः राजा तस्य समीपं गत्वा पृष्टवान्– "भोः, भवान् परमसन्तोषेण जीवति इति भाति। कः भवान्? किं करोति?" इति।

तदा सः उक्तवान्– "श्रीमन्! अहं पुरोहितः। अहम् एतत्प्रदेशे व्रतपूजादिकं कारयन् पौरोहितवृत्त्या जीवामि" इति।

"एतया वृत्त्या भवान् सन्तोषेण जीवति इति भाति" इति उक्तवान् महाराजः।

तदा पुरोहितः उक्तवान्– "सदा हसन्मुखी भवामि इति तु सत्यम् एव। यतः

सः मम व्यवहारधर्मः। यद्दिने यथेष्टं दक्षिणा प्राप्यते तद्दिने सन्तोषः। यदा कोऽपि आयः न भवेत् तदा खेदः। यदा निर्धनानां सङ्कटं पश्यामि तदा अपि खेदः। एतादृशे सन्दर्भे भगवतः लीलां दृष्ट्वा हसामि। मम असहायकतां स्मरन् पुनः अपि हसामि" इति।

राजा ततः अग्रे गतवान्। तत्र सः एकं ज्योतिषिकं दृष्टवान्। 'एषः नित्यसन्तोषी स्यात् एव। यतः भविष्यत्काले किं किं प्रवर्तते इति एषः पूर्वम् एव जानाति। भविष्यतः कोऽपि चिन्ता न भवति' इति चिन्तितवान् राजा। अतः सः तस्य ज्योतिषिकस्य समीपं गत्वा– "भवान् नित्यसन्तोषी वा?" इति पृष्टवान्।

"अहं भविष्यत्काले जायमानं सर्वं ज्ञातुं शक्नोमि इति चिन्तयन् भवान् एवं वदति किल? किन्तु तथा नास्ति भोः। आगमिष्यमाणानां कष्टानां विषये उद्वेगः। तथैव प्रतिदिनं समीपम् आगच्छतः मरणस्य विषये तु महती भीतिः। एवं स्थिते सन्तोषः कुतः?" इति पृष्टवान् ज्योतिषिकः।

राजा इतोऽपि अग्रे गतवान्। कस्मिंश्चित् ग्रामे एकत्रितान् हसन्मुखिनः जनान् सः दृष्टवान्। तेषां मध्ये कश्चित् उष्णीषधारी विदूषकः, विनोदं श्रावयन् रुचिरम् अभिनयन् सर्वान् जनान् हासयन् आसीत्।

तस्य कार्यक्रमस्य समाप्तेः अनन्तरं राजा एकं सुवर्णनाणकं तस्य पुरतः स्थापयित्वा तं



पृष्टवान्– "भोः, हासः एव भवतः वृत्तिः। एवं तर्हि भवान् नित्यसन्तुष्टः स्यात् खलु?" इति।

तदा सः आगतानि अश्रुबिन्दूनि हस्तेन मार्जयन्– "भोः, उदरम्भरणार्थम् अहं सर्वदा हसामि। विनोदैः जनान् रञ्जयामि। एवं यदि न करोमि तर्हि मम पत्नीपुत्रैः उपवासः आचरणीयः भवेत्। पश्यतु, एतावत्पर्यन्तं जनानां मनोरञ्जनं कृतवान्। किन्तु धनं विशेषतः न प्राप्तम्। भवान् कोऽपि धर्मात्मा इति भाति। एकं सुवर्णनाणकं दत्तवान्। एतेन धनेन अद्य मम पुत्राः पूर्णोदरं भोक्तुं शक्नुवन्ति। एतत् एव जीवनम्" इति उक्त्वा खेदेन हसितवान्।

एतत्सर्वं पश्यतः महाराजस्य



सन्तोषप्राप्तिः दूरे तिष्ठतु, पूर्वतनः खेदः एव अधिकः जातः। तथापि सः बहूनि दिनानि यावत् नित्यसन्तोषिणः अन्वेषणं कृतवान्।

एवं दीर्घप्रयाणेन श्रान्तः राजा एकदा वृक्षस्य अधः उपविष्टः आसीत्। तत्रैव सः निद्रां प्राप्तवान् अपि। यदा जागरणं जातं तदा तीव्रा बुभुक्षा अनुभूता तेन। सः उत्थाय परितः दृष्टवान्। समीपे एव केनचित् क्रियमाणः वृक्षच्छेदनशब्दः तेन श्रुतः। राजा अश्वं चालयन् तस्यां दिशि गतवान्। तत्र कश्चन वृक्षच्छेदने मग्नः आसीत्।

राजानं दृष्ट्वा सः उत्साहेन पृष्टवान्– "भोः श्रीमन्, जनसञ्चाररहितम् एतं प्रदेशं भवान् किन्निमित्तम् आगतवान्? कः भवान्?" इति।

"अहं कश्चन पथिकः। मार्गभ्रष्टः सन् अत्र आगतवान्" इति उक्तवान् राजा।

"एवं तर्हि भवान् श्रान्तः बुभुक्षितः च स्यात्। यतः इदानीं मध्याह्नकालः। आगच्छतु मम कुटीरम्" इति उक्त्वा सः महाराजं स्वकुटीरं नीतवान्।

राजा अश्वम् एकत्र बद्ध्वा हस्तौ पादौ च प्रक्षाल्य अन्तः आगतवान्। सः पुरुषः महाराजस्य पुरतः द्वित्राणि फलानि रोटिकाः च आनीय स्थापितवान्।

राजा रोटिकाः खादन् पृष्टवान्– "भवान् एकाकी एव अत्र निवसति वा?" इति।

एतत् श्रुत्वा सः हसन्– "एकाकी कथम्? मञ्जुलं कलरवं कुर्वन्तः पक्षिणः अत्र सन्ति। नर्तकाः मयूराः सन्ति। चटुलाः शशाः सन्ति। स्निग्धाः हरिणाः सन्ति। एते सर्वे मम स्नेहिताः एव। तेषां सहवासे अहम् एकाकितां कदापि न अनुभवामि। इदानीं भवान् एव वदतु– अहम् एकाकी वा?" इति प्रतिप्रश्नं कृतवान्।

एवं किञ्चित्कालं तयोः सरसः वार्तालापः प्रवृत्तः। 'अहम् एकस्य नित्यसन्तोषिणः पुरतः अस्मि' इति भावना आगता महाराजस्य मनसि।

"भवान् अस्मिन् अरण्यप्रान्ते सदा सन्तोषेण कालं यापयति इति भाति। सत्यं किल?" इति पुनः पृष्टवान् राजा।

"भवता सत्यम् एव उक्तम्। अत्र समयः कथं गच्छति इति अहम् एव न जानामि। न

मम कौटुम्बिकबन्धनम्। न मम कामनाः च। अतः अहं सदा सन्तोषेण एव तिष्ठामि" इति उक्तवान् सः।

'यादृशम् अन्वेष्टुम् अहं सर्वत्र सञ्चारं कृतवान् सः एव लब्धः इदानीम्' इति निश्चयः जातः महाराजस्य मनसि।

"भवतः एकम् अङ्गुलीयकम् आवश्यकम्। तदर्थं यावदपि मूल्यं दातुं सिद्धः अहम्" इति तम् उक्तवान् राजा।

"यदि मम अङ्गुलीयकं स्यात् तर्हि सन्तोषेण निश्शुल्कम् एव दद्याम्। किन्तु किं करोमि, मम समीपे अङ्गुलीयकं नास्ति। भौतिकसम्पदा किं मम इति तत् न सङ्गृहीतवान् अहम्" इति उक्तवान् सः।

राजा तस्य आतिथ्यार्थं कृतज्ञतां समर्प्य राजधानीं प्रत्यागतवान्। अनन्तरदिने योगीश्वरसमीपं गत्वा– "श्रीमन्, महता श्रमेण अहं नित्यसन्तुष्टम् अन्विष्टवान्। किन्तु तस्य समीपे अङ्गुलीयकम् एव न आसीत्" इति उक्तवान् च।

तदा योगीश्वरः मन्दहासं प्रकटयन्– "भवता दृष्टः नित्यसन्तोषी अङ्गुलीयकस्य अभावे अपि सन्तोषेण तिष्ठति। भवान् तु महतः राज्यस्य अधिपतिः सन् अपि सदा चिन्तया बाध्यते। एवं वैपरीत्यस्य कारणं किं स्यात् इति भवान् चिन्तितवान् वा?" इति पृष्टवान्।

"प्रायः सः सन्तोषस्य मूलं जानाति इति मन्ये" इति उक्तवान् राजा।

"तस्य दर्शनेन भवान् ज्ञातवान् स्यात् यत् तस्य न काऽपि कामना अस्ति इति। सन्तोषस्य कारणम् ऐश्वर्यं न। यथा यथा कामना वर्धते तथा तथा चिन्ता अपि वर्धते। यस्य कामनाः अधिकाः सः एव दरिद्रः। अतः भवान् राजा सन् अपि दरिद्रः एव। कामनाः न्यूनीकृत्य कर्तव्यबुद्ध्या यदि राजधर्मम् आचरेत् तर्हि भवान् अपि नित्यसन्तुष्टः भवितुम् अर्हति। सर्वम् अस्माकं हस्ते अस्ति" इति हितं बोधितवान् यतीश्वरः।

सोमशेखरः यतीश्वरं श्रद्धया नमस्कृत्य राजभवनं प्रत्यागतवान्। कालान्तरे तस्य चिन्ता अपि दूरङ्गता।





# पिशुनता

पूर्वं विदेहराज्यं विक्रमकीर्तिः नाम राजा पालयन् आसीत्। महाराजस्य चिन्मयः नाम आन्तरङ्गिकः स्नेहितः आसीत्। चिन्मय-महाराजयोः गाढां मैत्रीं राजोद्योगिनः बहवः न सहन्ते स्म। कथञ्चित् तयोः मध्ये मतिभेदः आनेतव्यः इति ते चिन्तयन्तः आसन्।

एवं स्थिते एकदा महाराजस्य वृद्धा माता दिवंगता। तदा नगरप्रमुखाः बहवः महाराजसमीपम् आगत्य सहानुभूतिं प्रदर्शितवन्तः। किन्तु चिन्मयः तत्सन्दर्भे राजभवनम् एव न आगतवान्।

अत्र कारणं तु तद्दिने एव तस्य आत्मीयसेवकस्य गृहे प्रचलिष्यमाणे कस्याश्चित् अनाथबालिकायाः विवाहे तेन अवश्यम् उपस्थातव्यम् आसीत्।

राजा मातुः दहनाद्यन्त्यसंस्कारं विशेषरीत्या निर्वर्तितवान्। तत्समये अपि चिन्मयः तत्र न उपस्थितः आसीत्। एतत् लक्षितवन्तः तद्विरोधिनः महाराजसमीपं गत्वा उक्तवन्तः– "महाराज! अस्माकं सर्वेषाम् आश्चर्यं यत् भवतः आत्मीयः स्नेहितः चिन्मयः अत्र किमर्थं वा न दृश्यते इति। मातृवियोगात् खिन्नं भवन्तं सान्त्वयितुं तु न आगतः। अन्त्यसंस्कार-सन्दर्भे अपि न उपस्थितः। किम् एतत् स्नेहितलक्षणं वा? कृतज्ञताप्रदर्शनरीतिः वा? प्रायः भवन्तम् अवमानयितुम् एव सः एवं व्यवहृतवान् स्यात्" इति।

"सत्यं किल! सः किमर्थम् एतत्सन्दर्भे न उपस्थितवान्? अवश्यम् उपस्थातव्यम् आसीत् तेन। अनुपस्थितौ किमपि विशेषकारणं स्यात् वा?" इति।

"विशेषकारणं किम्? वयं सर्वं न जानीमः वा? सः तदीयसेवकस्य गृहे प्रचलतः विवाहस्य कार्यक्रमे उपस्थितः आसीत् तदा। राजमातुः मरणदुःखापेक्षया सेवकगृहस्य

सन्तोषः एव तस्य दृष्ट्या श्रेष्ठः संवृत्तः। 'इन्द्रसिंहासनम् आरूढः अपि शुनकः अस्थिखण्डास्वादनम् एव चिन्तयति' इति ज्येष्ठाः वदन्ति। अल्पे तस्मिन् भवता या महती कृपा प्रदर्शिता तस्य फलम् एतत्'' इति असूयया उक्तवन्तः ते चिन्मयविरोधिनः।

राजा तु मातृवियोगतः खिन्नः अस्ति। तदुपरि एतेषां पिशुनतावचनानि। एतेन कोपोन्मत्तः जातः राजा।

सः महता कोपेन भटान् आहूय– ''तं गर्वोन्मत्तं चिन्मयं बद्ध्वा आनीय कारागारे स्थापयन्तु'' इति आज्ञापितवान्।

सेवकाः साक्षात् विवाहमण्डपं गतवन्तः। तत्र विवाहाङ्गकार्यक्रमेषु मग्नं चिन्मयं ''राजाज्ञा'' इति एतावदेव उक्त्वा बद्ध्वा आनीय कारागारे स्थापितवन्तः।

एतां वार्तां विक्रमकीर्तिमहाराजस्य मन्त्री अमलवर्मा श्रुतवान्। सः झटिति महाराजसमीपं गत्वा– ''राजन्! चिन्मयः कार्याकार्यविवेकी लोकव्यवहारज्ञः च। 'सः मेधावी, काले काले समुचितमार्गदर्शनं करोति च। राज्यहिते तस्य महत्त्वभूतं पात्रम्' इति भवता एव उक्तम्। तादृशः सहानुभूतिप्रदर्शनार्थम्, अन्त्यक्रियायां भागं ग्रहीतुं वा न आगतः इति चेत् तत्र प्रबलं कारणं किमपि स्यात् एव। अतः भवान् स्वयं तं पश्यति चेदेव वरम् इति मम अभिप्रायः'' इति निवेदितवान्।



''किम् अन्यत् प्रबलं कारणम्? राजापेक्षया सेवकः एव श्रेष्ठः तस्य दृष्ट्या'' इति असमाधानेन उक्तवान् राजा।

''क्षाम्यतु माम्। वयम् एतत्सन्दर्भे चिन्मयविषये अन्यथाभावं प्रदर्शितवन्तः इति मम भाति'' इति पुनः उक्तवान् अमलवर्मा।

राजा क्षणकालं विचिन्त्य ''अस्तु तावत्'' इति वदन् चिन्मयस्य दर्शनार्थं प्रस्थितः। अमलवर्मा तम् अनुसृतवान्।

कारागारं गतः राजा कोपेन एव चिन्मयम् उक्तवान्- ''बहोः कालतः भवन्तम् आत्मीयमित्रं मन्यमानः आसम्। किन्तु भवान् मातृवियोगतप्तं मां सान्त्वयितुं किं, मम मातुः अन्त्यसंस्कारार्थम् अपि न

आगतवान्। राजभवने किं प्रवर्तते इति ज्ञातुं दृष्टिपातम् अपि न कृतवान्। सेवकस्य गृहे प्रचलिष्यमाणः विवाहः एव श्रेष्ठः संवृत्तः खलु?'' इति।

तत् श्रुत्वा चिन्मयः खेदपूर्णेन स्वरेण उक्तवान्– ''महाराज! एतद्विषये मया अपि किञ्चित् वक्तव्यम् अस्ति। भवान् निष्पक्षपातं चिन्तयति इति अहं विश्वसिमि। मम सेवकस्य गृहस्य विवाहार्थं मया अवश्यं गन्तव्यम् आसीत्। यतः निस्सन्तानः सः सेवकः मम प्रोत्साहकारणतः काञ्चित् अनाथबालिकां पोषितवान्। योग्यं वरम् अन्विष्य विवाहं निश्चितवान्। बालिकायाः वर्धने विवाहे च ममापि दायित्वम् आसीत् एव। सा बालिका मां पितृसमानं चिन्तयति इत्यतः मया तस्याः विवाहसन्दर्भे उपस्थातव्यम् आसीत् एव। दुःखस्य सन्तोषस्य च विषये राजा सेवकः इति तारतम्यभावः नास्ति। तात्कालिकमरण- दुःखापेक्षया चिरकालिकं भविष्यत् मुख्यम् इति भवान् अपि अङ्गीकुर्यात् एव। भवद्दर्शनं कृत्वा सहानुभूतिः प्रदर्शनीया आसीत् इति तु अहम् अङ्गीकरोमि। अतः एव मुहूर्तसमाप्तेः अनुक्षणम् एव विवाहमण्डपतः निर्गतः आसम्। तदा एव भटाः आगत्य मां बद्ध्वा अत्र आनीय स्थापितवन्तः'' इति।

चिन्मयस्य वचनं तिरस्कर्तुं न शक्तवान् विक्रमकीर्तिः।

''पिशुनजनानां वचनश्रवणेन मया चिन्मयविषये कोपः प्रदर्शितः। कोपवशात् च विवेचनं विना एव एतस्य बन्धनार्थम् आज्ञा कृता। पिशुनतापूर्णं वचनं यत् श्रुतवान् तस्य फलम् एतत्'' इति पश्चात्तापम् अनुभूतवान् राजा।

''चिन्मय! वस्तुस्थितिम् अपरामृश्य मया आज्ञा दत्ता, येन भवता कष्टम् अपमाननं च अनुभवोक्तव्यम् आपतितम्। मां क्षाम्यतु। भवतः उत्कर्षम् असहमानाः पिशुनतावचनैः मां चोदितवन्तः। ते तस्य फलम् अनुभविष्यन्ति'' इति उक्त्वा राजा चिन्मयहस्तयोः बद्धां शृङ्खलाम् स्वयम् अपसार्य प्रीत्या तं दृढम् आलिङ्गितवान्।






# १०

(चित्रसेनः उग्राक्षः च अनुचरैः सह गत्वा कपिलपुरदुर्गं वशीकृतवन्तौ। भूगृहे अन्धकारमये प्रकोष्ठे बन्धने स्थितं वीरसिंहं बन्धविमुक्तं कृतवन्तौ। पुत्रीं दृष्ट्वा सन्तुष्टः वीरसिंहः– "द्रोहिणः नागवर्मणः का कथा?" इति पृष्टवान्। "तस्य बन्धनार्थं मया सेनानायकः प्रेषितः" इति उत्तरं दत्तवान् चित्रसेनः। तदनन्तरम्.....)

**चि**त्रसेनस्य वचनं श्रुत्वा वीरसिंहः आश्चर्यचकितः। सः एकवारं राक्षसाधिपम् उग्राक्षं पश्यति। पुनश्च चित्रसेनम्।

अनन्तरं सः चित्रसेनम् उक्तवान्– "भोः, भवतोः मध्ये यजमानसेवकयोः सम्बन्धः अस्ति इति विश्वसितुम् एव न शक्यते किल? महाबलशाली राक्षसः क्व? अल्पः मानवः क्व? कथं वा राक्षसः मानवस्य सेवकः भवेत्? भवतोः मध्ये अन्यविधः एव सम्बन्धः अस्तीति मया श्रुतम् आसीत्। अतः एव नागवर्मणः द्रोहाचरणं पूर्वम् एव जानन् अपि अहं पार्श्वराज्यस्थस्य भवतः साहाय्यं प्रष्टुं न शक्तवान्। किन्तु एतादृशः विचित्रः सम्बन्धः पुरतः एव दृश्यते। अतः अत्र विश्वासः प्रकटनीयः" इति।

"अत्र आश्चर्यस्य कोऽपि विषयः नास्ति। उग्राक्षस्य व्यवहारेण कदाचित् द्रष्टुः सन्देहः उत्पद्यते। भवतः पुत्री अपि पूर्वम् एवम् एव सन्देहं प्राप्य माम् अन्यथाभावेन दृष्टवती आसीत्। इदानीं



निरीक्षमाणाः स्मः च। अहं मदनुजाः च भवतां विधेयाः एव।" इति।

तदा लज्जया अवनतमुखीं कटाक्षेण पश्यन्तीं पुत्रीं कान्तिमतीं किमपि वक्तुम् उद्युक्तः वीरसिंहः। अत्रान्तरे उभौ सेवकौ कष्टेन निःश्वसन्तौ धावन्तौ आगत्य– "महाराज! महत् सैन्यं दुर्गसमीपम् आगतम्। नागवर्मणः तत् इति भाति। सैन्यं तु वेगेन आगच्छत् अस्ति। श्रुत्वा देवः प्रमाणम्" इति निवेदितवन्तौ।

नागवर्मणः नाम्नः श्रवणमात्रेण वीरसिंहः सर्पदर्शनेन इव चकितः अभवत्। चित्रसेनः अपि अत्याश्चर्यं प्राप्तवान्। कथम् एषः इदानीम् अत्र आगतः?

'नागवर्मा धवलगिरिं जितवान् स्यात् वा? अथवा.... युद्धे पराजित्य पलायनेन अत्र आगतवान् स्यात् वा? एतस्य नागवर्मणः नाशनार्थं मया प्रेषितस्य सेनापतेः का कथा? कुत्र गतः स्यात् सः?'

'तत् यथाकथम् अपि भवतु। कपिलपुरदुर्गस्य रक्षणं तु सद्याकालीनं प्रथमकर्तव्यम्। दुर्गभित्तिः तु तत्र तत्र पतिता अस्ति। कुतश्चित् अपि शत्रवः प्रवेष्टुम् अर्हन्ति।'

एवं चिन्तयन् चित्रसेनः उग्राक्षं पश्यन्– "भोः, उग्राक्ष! भवान् अनुचराणां साहाय्येन दुर्गद्वारस्य रक्षणं करोतु। धनुर्धारिणः सैनिकाः दुर्गभित्तिम् आरुह्य बाणप्रयोगैः शत्रूणाम् पुरोगमनं स्थगयन्तु। विलम्बस्य न

तस्याः संशयः निवृत्तः। सा राक्षसस्य विषये विश्वस्ता अपि" इति मन्दहासपूर्वकम् उक्तवान् चित्रसेनः।

एतत् वचनं शृण्वत्याः कान्तिमत्याः मुखे मन्दहासः स्फुरितः।

उग्राक्षः तु वीरसिंहम् अचलदृष्ट्या पश्यन् स्थाणुः इव स्थितः आसीत्।

वीरसिंहः क्षणकालं मौनं स्थित्वा उग्राक्षं पश्यन्– "राक्षसेश्वर, चित्रसेनेन यदुक्तं तत्र असत्यांशः कोऽपि नास्ति किल?" इति पृष्टवान्।

उग्राक्षः शिरः अवनमय्य विनयेन उक्तवान्– "महाराज! चित्रसेनेन सत्यम् एव उक्तम्। कदा वा सः विवाहितः भवेत्, तादृशं सुदिनं कदा वा पश्येम इति वयं सर्वे

अयं कालः। कुत्र सः अमरपालः?" इति वदन् इतस्ततः दृष्टवान्।

"गुप्तचराणां वचनं श्रुत्वा, शत्रूणां बलाबलं परीक्षितुम् इच्छन् अमरपालः झटिति इतः निर्गतवान्" इति सैनिकेषु कश्चित् निवेदितवान्।

"अस्तु तावत्, उग्राक्ष! भवान् दुर्गद्वारसमीपं गच्छतु" इति आदिष्टवान् चित्रसेनः।

उग्राक्षः उच्चैः हसन्– "महाराज! कपिलपुरदुर्गस्य द्वारप्रदेशः कुत्र? सर्वत्र द्वाराणि एव। तथैव दुर्गभित्तिः दृढः यदि स्यात् तर्हि एव किल धनुर्धारिणः भित्तेः आरोहणं कुर्युः? इदानीं न दुर्गभित्तिः, न वा द्वारप्रदेशः। एतावता मम सैनिकाः खनित्रैः कुद्दालैः च दुर्गभित्तिं पातितवन्तः। इदानीं सर्वत्र शिलायाः मृत्तिकायाः च राशिः! दुर्गस्य वशीकरणसन्दर्भे कियान् प्रयासः अनुष्ठितः इति प्रायः भवान् न जानाति। दुर्गभित्तेः नाशनं विना अन्तःप्रवेशः दुष्करः एव आसीत् किल?" इति उक्तवान्।

"एवं वा!" इति आश्चर्यं प्रकटयन् चित्रसेनः– "एवं तर्हि वयं सङ्कटे पतिताः। शत्रवः सर्वदिग्भ्यः अपि आक्रमणं कर्तुं शक्नुवन्ति। नागवर्मा एतावच्छीघ्रम् एव धवलगिरिं जित्वा प्रत्यागच्छेत् इति अहं न चिन्तितवान् अपि। अस्माकं सेनानायकस्य का वा गतिः इत्यपि न ज्ञायते" इति उक्तवान्।



अत्रान्तरे अमरपालः तत्र धावन् आगत्य–"प्रभो! सः द्रोही नागवर्मा विजयीभूय न, पलायनं कुर्वन् अत्र आगतवान्। तेन सह स्थिता सेना अपि अत्यल्पा एव। नागवर्मणः पृष्ठतः अन्या महासेना आगच्छन्ती अस्ति। सा प्रायः भवतः पितुः वा अस्माकं सेनानायकस्य वा स्यात्। इदानीं सङ्कटे पतिताः वयं न, अपि तु सः जीविताशया पलाय्य आगतः नागवर्मा एव" इति उक्तवान्।

अमरपालस्य वचनं श्रुत्वा उग्राक्षः उच्चैः हसितवान्। चित्रसेनः अपि एतया वार्तया अतीव सन्तुष्टः।

सः अमरपालं पश्यन्– "भोः, समीचीना एव वार्ता भवता आनीता। भवतः




सूचितवान् उग्राक्षः।

"आम्। एषः अपि उचितः उपायः। पृष्ठतः महती सेना अनुगच्छन्ती अस्ति इति सः जानाति। रक्षणाशया सः अविचार्य दुर्गं प्रविशति एव। एतत् दुर्गम् अस्मदधीने अस्ति इति यदि सः जानीयात् तर्हि निश्चयेन पलायनं कुर्यात्। तेन अस्माकं पुनरपि क्लेशः एव। अतः इदानीं कूटयुद्धम् एव उचितः मार्गः। एतादृशैः सह धर्मयुद्धं कदापि न भवेत्। शठं प्रति शाठ्यम् एव समाचरणीयम्" इति उग्राक्षस्य प्रस्तावं समर्थितवान् अमरपालः।

"एतत् तु सत्यम् एव" इति वदन् चित्रसेनः क्षणकालं सगम्भीरं आलोचितवान्। अनन्तरम् उक्तवान् च– "अन्तःप्रवेशार्थं शत्रुसैनिकेभ्यः अवकाशः दत्तः चेत् तेषु केचन वा राजभवनं प्रविश्य निलीय तिष्ठेयुः किल? तदा पुनः अपि नूतना समस्या उद्भवति एव" इति।

"तत् यथा न भवेत् तथा अहं व्यवस्थां करोमि महाराज! भवान् एतेषां मत्सेवकानां सामर्थ्यम् इतोऽपि स्पष्टं न ज्ञातवान्। द्रोहिणः तस्य नागवर्मणः नाशनं विना एतत्प्रदेशे शान्तिः न प्रसरेत् एव। यावत् सः जीवेत् तावत् अन्तःशूलम् इव अस्मान् पीडयिष्यति। यतः ज्वालाद्वीपवासिनां साहाय्यबलम् अस्ति तस्य" इति उक्तवान् उग्राक्षः।

"उग्राक्ष! युक्तम् एव उक्तवान् भवान्" प्रत्युत्पन्नमतिः प्रशंसार्हा एव। इदानीं भवान् भवतः सैनिकान् एकत्रीकरोतु। सः द्रोही यदा समीपम् आगच्छति तदा वयं दुर्गस्य पुरतः प्राङ्गणे एव तं सम्मुखीकृत्य नाशयेम" इति उक्तवान्।

"महाराज! मम मनसि अन्यः एव विचारः स्फुरति। यदि अनुमतिः स्यात् तर्हि वदेयम्" इत उक्तवान् उग्राक्षः।

"विलम्बः किमर्थम्? वदतु भोः।" इति त्वरां प्रदर्शयन् उक्तवान् चित्रसेनः।

"नागवर्मा अनुचरैः सह दुर्गस्य अन्तः आगच्छतु नाम। सर्वेषाम् प्रवेशानन्तरं वयम् अकस्मात् सर्वदिक्तः अपि आक्रमणं कृत्वा एकोऽपि सजीवं यथा न तिष्ठेत् तथा मारणहोमं करवाम" इति स्वाभिप्रायं

इति स्वसन्तोषं प्रकटयन् सैनिकान् उद्दिश्य उक्तवान् वीरसिंहः– "भवत्सु यः कोऽपि तं द्रोहिणं नागवर्माणं सजीवम् आनीय मह्यम् अर्पयेत् तर्हि तस्मै अर्धराज्यं दास्यामि। यः तस्य कर्तितं शिरः आनीय प्रदर्शयति सः सहस्रं सुवर्णनाणकानि पारितोषिकरूपेण प्राप्स्यति" इति।

"अर्धं राज्यं वा!" इति उद्गारं प्रकटयन्ती कान्तिमती प्रश्नार्थकदृष्ट्या पितुः मुखं दृष्टवती।

"आं पुत्रि! अर्धं राज्यं दास्यामि। सः दुष्टः मां शक्तिहीनं कृत्वा, कारागारे संस्थाप्य एतावत्पर्यन्तं नरके पातितवान् आसीत्। राज्यं वशीकृत्य शासनम् उध्वस्तं कृतवान्। तस्य दण्डनार्थं यावत् वा मूल्यं दातुं सिद्धः अहम्" इति उद्वेगेन कान्तिमतीम् उक्तवान् वीरसिंहः।

"अस्तु तावत्, अस्मासु कस्यापि अवस्थितिः तैः शत्रुभिः ज्ञाता न भवेत्। सर्वे तत्र तत्रैव निलीय तिष्ठन्तु। यदा नागवर्मा सैन्येन सह दुर्गं प्रविशति तदा युगपत् आक्रमणं कृत्वा तान् समूलं नाशयेम। ज्ञातं किल उग्राक्ष!" इति उग्राक्षम् उक्तवान् चित्रसेनः।

"आं महाराज! एतत्कार्यं मम अमरपालस्य च। भवान् वीरसिंहमहाराजः राजकुमारी च राजभवने कुत्रापि स्थित्वा अस्माकं कार्यं परिशीलयन्तु" इति उक्त्वा उग्राक्षः अनुचरान् पश्यन् आज्ञापितवान्–



"हुं, सर्वं श्रुतं किल?" इति।

अमरपालस्य उग्राक्षस्य च निर्देशने सर्वे सैनिकाः राक्षसाः च भवनानां पृष्ठतः, वृक्षाणाम् उपरि, इतरत्र च निलीय स्थितवन्तः।

एतस्मिन् एव समये दुर्गसमीपस्थम् अरण्यं प्रविष्टः नागवर्मा तीक्ष्णदृष्ट्या दुर्गं पश्यन् वदति स्म– "करवीर! अस्माकम् ऊहा यथावत् एव जाता। ते शत्रवः आक्रमणं कृतवन्तः एव। दुर्गं नाशितवन्तः अपि। इदानीं तत्र कोऽपि न दृश्यते। सर्वे निर्गताः स्युः इति चिन्तयितुम् अपि न शक्यते। अथवा निर्गताः स्युः इत्येव चिन्तयेम। एवं तर्हि न्यूनातिन्यूनं युद्धे मृतानां शवाः खलु दृश्येरन्? किन्तु अत्र मृतानां शवाः अपि न दृश्यन्ते इव" इति।



करवीरः।

"मां तु अन्यः सन्देहः बाधते— 'दुर्गे भूगृहे अन्धकारमये प्रकोष्ठे स्थापितः वृद्धः वीरसिंहः तेषां वशं गतः स्यात् वा, उत मृतः स्यात् वा' इति। यदि सः जीवितः स्यात् तर्हि अस्माकम् अपायः एव। इदानीं तु दुर्गप्रवेशं विना अन्यः मार्गः नास्ति एव। तारकेश्वरस्य आगमनतः पूर्वं अस्माभिः काऽपि रक्षणाव्यवस्था करणीया। छिन्नविच्छिन्नम् अपि दुर्गं तात्कालिकः आश्रयः भवितुम् अर्हति" इति उक्तवान् नागवर्मा।

अनन्तरं नागवर्मा करवीरः च सैनिकान् उक्तवन्तौ— "पृष्ठतः शत्रुसेना अस्मान् अनुगच्छन्ती अस्ति। तस्याः आक्रमणतः रक्षणं प्राप्तव्यं चेत् इदानीं कपिलपुरदुर्गम् एव शरणम्। अतः सर्वे त्वरया गच्छन्तु" इति।

नागवर्मा करवीरः च अश्वम् आरुह्य अग्रे प्रस्थितवन्तौ। पदातयः सैनिकाः तौ अनुसृतवन्तः। तेषां पृष्ठतः पुनः केचन अश्वारोहिणः स्थितवन्तः। एवंक्रमेण ते अर्धघण्टाभ्यन्तरे दुर्गसमीपस्थं प्राङ्गणं प्राप्तवन्तः।

नागवर्मा करवीरः च सैन्यं तत्रैव स्थगयित्वा दुर्गद्वारसमीपं गतवन्तौ। पतितं द्वारप्रदेशं परिशील्य अन्तः दृष्टिं प्रसारितवन्तौ। अन्तः कस्यापि चलनं न दृश्यते। भीकरं श्मशानमौनं तत्र!

सः करवीरः ज्वालाद्वीपवासिनां व्याघ्रचर्मधारिणां नायकः। सः कैश्चित् अनुचरैः सह नागवर्माणम् अनुसरन् आसीत्। धवलगिरिं वशीकर्तुं गतः नागवर्मा चित्रसेनस्य जनकेन तारकेश्वरेण पराजितः सन् कपिलपुरदुर्गं प्रति धावन् आगच्छन् आसीत्।

"आं महाराज! भवतः वचनं युक्तम् एव। शत्रवः दुर्गरक्षणार्थं स्थितान् अस्मदीयान् पराजित्य दुर्गं वशीकृतवन्तः इव। किन्तु एकोऽपि सैनिकः न दृश्यते किल? दुर्गस्थम् ऐश्वर्यं लुण्ठयित्वा ते सर्वे प्रायः चित्रसेनस्य राजधानीं गतवन्तः स्युः। मम तु आश्चर्यं यत् तौ राक्षसपक्षिणौ साहसिनः मदनुचराः कुत्र वा गताः स्युः?" इति उक्तवान्

"अत्र कापि वञ्चना तु न स्यात् किल?" इति उक्तवान् नागवर्मा।

"वञ्चनायाः प्रसक्तिः कुत्र? राजभवने यत् ऐश्वर्यं लब्धं तत्सर्वं लुण्ठयित्वा ते अग्रिममार्गम् अनुसृतवन्तः। सः वृद्धः राजा अपि तैः प्राप्तः स्यात्। अतः भेतव्यं किमपि नास्ति" इति उक्तवान् करवीरः।

"अस्माकं सैनिकेषु केचन वा युद्धे मृताः स्युः एव किल? तेषां शवाः अपि अत्र न दृश्यन्ते! शवाः कथम् अदृश्यतां गताः? उग्राक्षस्य अनुचराः राक्षसाः अत्र उपस्थिताः न स्युः किल?" इति सन्देहं प्रकटितवान् नागवर्मा।

उग्राक्षस्य नामश्रवणेन ज्वालाद्वीपवासिनां व्याघ्रचर्मधारिणां नायकस्यापि करवीरस्य हृदये भयकम्पनम् उत्पन्नम्। यतः राक्षसात् सः नितरां बिभेति।

सः कम्पमानेन स्वरेण— "नागवर्म-महाराज! इदानीम् एकः उपायः आश्रितः चेत् युक्तं भवेत् इति भाति" इति वदन् परितः पश्यन् स्वकीयम् अश्वं नागवर्मणः समीपं नीतवान्। तस्य कर्णे किमपि सूचितवान् च।

तत् श्रोतुम् अशक्तः नागवर्मा— "किञ्चित् उच्चैः वदतु भोः" इति सूचितवान्।

तदा करवीरः मन्दस्वरेण— "अत्र कोऽपि न दृश्यते एव। सर्वत्र श्मशानमौनं व्याप्तम् अस्ति। अतः ममापि सन्देहः एव— 'ते राक्षसाः चित्रसेनादयः च अस्मान् प्रतीक्षमाणाः आक्रमणार्थं सिद्धाः स्युः वा' इति। कल्पनामात्रस्थितायाः भीतेः कारणतः एतत् भवनम् अपि त्यक्तुं न शक्यते। वृकभीत्या व्याघ्रमुखं गतस्य परिस्थितिः भवेत् अस्माकम्। अनुगच्छन्ती तारकेश्वरस्य सेना अस्मान् नामावशिष्टान् कुर्यात्। अतः वयम् एवं करवाम यत् प्रथमं सैनिकान् अन्तः प्रवेशयाम। 'कोऽपि अपायः नास्ति' इति निश्चयः भवति चेत् वयम् अपि प्रवेशं करवाम। स्वयं विषपरीक्षायाः साहसः मास्तु अस्माकम्' इति सूचितवान्।

(अनुवर्तते)






# त्रयः वणिजः

श्मशाने इतस्ततः गमनं यस्य प्रवृत्तिः एव जाता आसीत् तादृशः राजा त्रिविक्रमः पुनः अपि वृक्षस्य समीपम् आगत्य शाखायां लम्बमानं शवम् अधः अवतार्य स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "भोः राजन्! पुनः अपि आगतवान् एव किल भवान्! भीतिजनके अस्मिन् श्मशाने एवं कष्टम् अनुभवन् भवान् एकाकी न स्यात्। कोऽपि भवतः साहाय्यकः स्यात् अपि। सः स्नेहितः भागहरश्च स्यात्। अन्यथा भवान् एकाकी कथम् एतावत् कष्टं सहेत? किन्तु कार्यसाधनानन्तरं भवान् मित्राय दत्तं वचनं पालयितुं शक्नुयात् वा? यतः मानवबुद्धिः अतीव अस्थिरा। अत्र उदाहरणरूपेण त्रयाणां वणिजां कथां श्रावयामि। कथां शृण्वतः भवतः मार्गायासः लक्षितः न भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



पूर्वं प्रतिष्ठानपुरनामके ग्रामे जयेन्द्रः, सोमेन्द्रः, शिवदासः इति त्रयः वणिजः आसन्। ते सामान्यतः समवयस्काः एव। अतः तेषु परस्परं मैत्री उत्पन्ना। ते परस्परं नाम्ना एव आह्वयन्ति स्म। वाणिज्यनिमित्तं विदेशः गन्तव्यः चेत् ते सदा सहैव गच्छन्ति स्म।

प्रतिष्ठानपुरस्य वज्रखनी सुप्रसिद्धा। तत्र प्राप्तानि वज्राणि स्वीकृत्य ते सिंहपुरनामकं नगरं गतवन्तः। तत्र प्रतिष्ठानपुरीयस्य वज्रस्य विशेषमूल्यम् आसीत्।

किन्तु न ज्ञायते किं कारणम् इति, मासद्वयानन्तरं शिवदासेन विना एव जयेन्द्रः सोमेन्द्रः च प्रतिष्ठानपुरं प्रत्यागतवन्तौ। अत्यन्तदुःखितयोः तयोः मुखं कान्तिहीनम् आसीत्।

आगमनसमनन्तरम् एव तौ शिवदासस्य गृहं गत्वा तदीयां पत्नीं दुःखपूर्णेन स्वरेण उक्तवन्तौ– "भगिनि, प्रतिप्रयाणसमये कस्याञ्चित् रात्रौ अरण्ये स्थातव्यम् आपतितम्। तत्सन्दर्भे कश्चन व्याघ्रः मौनम् आगत्य मुखेन शिवदासम् उन्नीय पलायनम् अकरोत्। तत्समये आवां जागरितौ सन्तौ कोलाहलं कृतवन्तौ। किन्तु तेन किमपि प्रयोजनं न सिद्धम्" इति।

"शिवदासः सिंहपुरीयस्य कस्यचित् वणिजः हस्ते वज्राणि समर्प्य 'यवादिद्वीपेषु सञ्चारं कृत्वा एतानि विक्रीय आगच्छतु" इति तम् उक्तवान् आसीत्। 'धनं स्वीकर्तुम् आगामिनि वर्षे आगमिष्यामि' इति उक्तवान् आसीत् अपि। किन्तु मध्ये दौर्भाग्यवशात् एवं प्रवृत्तम्। आवाम् एव गत्वा तत् धनम् आनेष्यावः" इत्यपि निवेदितवन्तौ तौ।

शिवदासस्य अप्राप्तवयस्काः त्रयः बालाः आसन्। एतादृशपरिस्थितौ एव सः दिवङ्गतः। अतः कर्णकठोरं रुदत्याः तस्य पत्न्याः नागवेण्याः शोकस्य अन्त्यम् एव नास्ति! किन्तु रोदनेन हस्तच्युतं न प्राप्यते किल?

जयेन्द्रः सोमेन्द्रः च तस्यै समाधानवचनानि वदन्तौ उक्तवन्तौ– "भगिनि, इतःपरं कुटुम्बभरणं कथम् इति चिन्ता मास्तु। शिवदासतः यः वज्राणि नीतवान् सः अचिरात् एव द्वीपतः प्रत्यागच्छेत्। द्वीपान्तरे वज्रस्य

विशेषमूल्यम् अस्तीति श्रूयते। तस्मात् वज्रवणिकृतः धनं वयम् आनीय दद्मः। आवां यावत् तिष्ठावः तावत् भवत्याः चिन्ता मास्तु'' इति।

जयेन्द्रस्य एका पुत्री। तस्य पुत्राः न सन्ति। सोमेन्द्रस्य तु प्रणवनामकः विंशतिवर्षीयः एकः पुत्रः।

प्रणवः परम्पराप्राप्ते वाणिज्ये आसक्तः एव। सः पितुः सकाशात् गणनादिव्यवहारं श्रद्धया जानन् पितुः साहाय्यम् आचरति स्म।

दिनेषु अतीतेषु सोमेन्द्रस्य आरोग्यं क्षीयमाणं जातम्। एतत् दृष्ट्वा प्रणवः वाणिज्यभारं सर्वं स्वयं निर्वहन् पितरं भारमुक्तं कृतवान्। तथापि सोमेन्द्रः स्वस्थः तु न जातः।

एवम् एव कानिचन दिनानि अतीतानि। सोमेन्द्रस्य अनारोग्यं वर्धते एव। 'इतःपरं बहुकालम् अहं न जीवामि' इति ज्ञातवान् सोमेन्द्रः। तस्य मनसि काऽपि चिन्ता बाधते।

एकदा सोमेन्द्रः प्रणवम् आहूय– ''पुत्र! मम मरणं सन्निहितम् ...'' इति किमपि वक्तुम् आरब्धवान्। किन्तु कासकारणतः सः अग्रे वक्तुं न शक्तवान्। अन्ते महता क्लेशेन ''जयेन्द्रेण अर्धः भागः दातव्यः अस्ति'' इति एतावत् सूचितवान्। पुनः श्वासक्लेशात् नेत्रे निमील्य मौनं स्थितवान्। अन्ते क्लेशम् अनुभवन्



क्षीणस्वरेण कांश्चन शब्दान् उच्चार्य शाश्वताय नेत्रे निमीलितवान् एव। पितुः अन्तिमानां पदानाम् अर्थम् अवगन्तुं कष्टम् एव अनुभूतवान् प्रणवः।

अन्तिमश्वाससन्दर्भे सोमेन्द्रः सूचितवान् यत् शिवदासस्य गणनासम्बन्धे जयेन्द्रेण इतोऽपि किञ्चित् दातव्यम् अस्ति इति, यत् दातव्यम् आसीत् तत् पूर्णतः शिवदासस्य पत्न्यै आत्मना न दत्तम् इति च। एतस्य किं तात्पर्यम् इति तत्क्षणे न ज्ञातवान् प्रणवः। तथापि 'भवतः अन्तिमेच्छां पूरयिष्यामि एव' इति पित्रे वचनं दत्तवान् सः।

भक्त्या श्रद्धया च पितुः अन्त्यक्रियां समापितवान् प्रणवः। अनन्तरं सः कदाचित् जयेन्द्रसमीपं गत्वा– ''श्रीमन्! मम पित्रे



भवता दातव्यं किमपि अवशिष्टं वा? भवता दीयमानं धनं शिवदासपत्न्यैः नागवेण्यम्बायै दातव्यम् इति पित्रा सूचितम् इति कारणतः अहम् एतत् पृच्छन् अस्मि। प्राचीनां गणनाम् अहं किमपि न जानामि। कृपया एतद्विषये मम साहाय्यं करोतु'' इति निवेदितवान्।

तत् श्रुत्वा जयेन्द्रः किञ्चित्कालं गम्भीरं चिन्तितवान्। अनन्तरम् उदासीन-भावनया– ''भवतः पित्रे मया दातव्यं किमपि नास्ति। प्रयाणसन्दर्भे वसतिगृहेषु नौकायां च कर्मकरेभ्यः कदाचित् भवतः पित्रा, कदाचित् मया च किञ्चित् किञ्चित् धनं दीयते स्म। एतादृशं सर्वम् अल्पव्ययः इति कारणतः अहं गणनायां न लिखितवान्। प्रायः भवतः पिता एतादृशं व्ययम् अपि गणयन् 'मया दातव्यम् अस्ति' इति उक्तवान् स्यात् अपि। एतादृशं धनम् एव शिवदासाय अपि दातव्यं स्यात्। किन्तु नागवेणीभगिन्यै एतादृशस्य अल्पस्य धनस्य दानं उचितं न भवेत् किल?'' इति उक्तवान्।

किञ्चित्कालानन्तरं पुनः– ''भवतः पित्रा किम् उक्तम् इति भवता स्पष्टं श्रुतं वा?'' इति पृष्टवान्।

''प्राणनिर्गमनसमये सः महता कष्टेन क्षीणस्वरेण किञ्चित् उक्तवान्। शब्दाः अस्पष्टाः आसन्। मध्ये कासः च। अतः तेन यदुक्तं तत् मया एव अन्यथा गृहीतं स्यात् अपि'' इति उक्तवान् प्रणवः।

एतद्विषये वार्तालापः पुनः न प्रवृत्तः। दयार्द्रः प्रणवः तु तदा तदा शिवदासकुटुम्बस्य साहाय्यं करोति स्म।

एवम् एव षट् मासाः अतीताः। जयेन्द्रः वाणिज्यनिमित्तं सिंहपुरं प्रस्थितवान्। प्रणवः अपि तम् अनुसृतवान्। उभयोः समीपे अपि अमूल्यानि रत्नानि आसन्।

एतस्मिन् प्रयाणे तौ एकम् अरण्यं प्रविष्टवन्तौ। तस्मिन् प्रदेशे कश्चन नूतनः संन्यासी आगत्य स्थितः आसीत्। सः रात्रौ तयोः वसतिव्यवस्थां भोजनादिव्यवस्थां च उपकल्पितवान्।

अनन्तरवार्तालापेन ज्ञातं यत् सः संन्यासी समीपस्थेषु ग्रामेषु ये साङ्क्रामिकरोगैः पीडिताः सन्ति तेषां सेवां कुर्वन् अस्ति इति।

जयेन्द्रः प्रणवः च संन्यासिनः कार्यं प्रशंसन्तौ रोगचिकित्सार्थं साहाय्यधनरूपेण किञ्चित् धनं दत्तवन्तौ।

अनन्तरं तौ समीपस्थां नदीम् अतिक्रम्य प्रयाणम् अनुवर्तयन्तौ पञ्चदशदिनानाम् अनन्तरं सिंहपुरं प्राप्तवन्तौ। तत्र कस्याञ्चित् धर्मशालायां वसत्यर्थं स्थितवन्तौ च।



अनन्तरदिने तौ वज्रविक्रयणार्थं नगरं गतवन्तौ। तत्र एकैकः एकैकां दिशम् अनुसृतवान्। महेन्द्रपुरस्य राजा इदानीं सिंहपुरम् आगतवान् आसीत्। एतां वार्तां श्रुतवान् प्रणवः। अतः सः महाराजस्य दर्शनं प्राप्य आत्मना आनीतानि वज्राणि प्रदर्शितवन्।

प्रणवः प्रतिष्ठानपुरीयः इति ज्ञात्वा राजा आश्चर्यं प्रकटयन्– "गतवर्षे अपि अहं यदा एतस्मिन् नगरे आसं तदा कश्चित् वज्रवणिक् आगतः आसीत्। तस्य समीपे एकं विशिष्टं वज्रम् आसीत्। ततःपूर्वं मया तावद्गात्रकं वज्रं न दृष्टम् आसीत् एव। योग्येन मूल्येन अहं तत् क्रीतवान्। भवता आनीतं वज्रम् अपि तज्जातीयम् एव। किन्तु एतत् आकारेण किञ्चित् अल्पम्" इति उक्तवान्।

तस्मै राज्ञे योग्येन मूल्येन कानिचन वज्राणि विक्रीय प्रणवः धर्मशालां प्रत्यागतवान्। किञ्चित्कालानन्तरं जयेन्द्रः अपि प्रत्यागतवान्। तदा प्रणवः जयेन्द्रं पृष्टवान्– "भवान् गतवर्षे महेन्द्रपुरराजाय वज्रं किमपि विक्रीतवान् वा?" इति।

"नैव किल? किमर्थम् एवं पृच्छति?" इति पृष्टवान् जयेन्द्रः।

"विशेषः कोऽपि नास्ति। तस्मै अहं कानिचन वज्राणि विक्रीतवान्। समीचीनः राजा। तीक्ष्णा स्मरणशक्तिः। वज्रमूल्यनिश्चये समर्थः च सः। मां प्रतिष्ठानपुरीयं ज्ञात्वा सः गतवर्षे अपि कोऽपि आगतः आसीत् इति उक्तवान्। अतः 'भवान् गतवान् आसीत् वा?' इति पृष्टवान्" इति उक्तवान् प्रणवः।

अनन्तरदिने प्रणवः जयेन्द्रं पुनः



शिवदासेन तस्मै वज्राणि न दातव्यानि आसन्'' इति।

पुनः दशदिनानाम् अनन्तरं प्रतिप्रयाणं कुर्वन्तौ तौ अरण्यस्थस्य संन्यासिनः आश्रमं प्राप्तवन्तौ।

अपरेद्युः जयेन्द्रः प्रणवम् उक्तवान्– ''एतस्मिन् प्रान्ते शिथिलावस्थायां स्थितः कश्चन देवालयः अस्ति। 'वाणिज्ये यदि लाभः तर्हि एकाकी पादाभ्याम् आगत्य भवतः दर्शनं प्राप्स्यामि' इति मया तत्रत्यः देवः प्रार्थितः आसीत्। अतः मया एकाकिना इदानीं गन्तव्यम्'' इति।

प्रणवः एतत् वचनं श्रुत्वा आश्चर्यचकितः। 'भगवद्दर्शनेन पुण्यम् एव सम्पादितं भवति' इति चिन्तयन् प्रणवः अपि देवालयं प्रति प्रस्थितः। किन्तु जयेन्द्रस्य व्रतस्य भङ्गः यथा न भवेत् तथा रहसि तम् अनुसृतवान् प्रणवः।

अग्रे गच्छन् जयेन्द्रः कस्यचित् शिलाराशेः समीपं गतवान्। तत्र एकस्य गर्तस्य उपरि स्थितां शिलां प्रयत्नेन अपसारितवान्। अपरक्षणे विकारध्वनिना आक्रन्दनं कुर्वन् तत्रैव पतितवान्। कश्चन महासर्पः फणां प्रसार्य गर्ततः बहिः आगच्छत्। शिलानां राशौ कुत्रापि अदृश्यः अभवत् च।

विकारध्वनिं श्रुत्वा प्रणवः धावन् आगतवान्। जयेन्द्रः तु असह्यया वेदनया पीड्यमानः– ''पिपासितः अस्मि...

उक्तवान्– ''श्रीमन्, शिवदासः कानिचन रत्नानि दत्त्वा विक्रयणार्थं कञ्चित् वणिजं यवादिद्वीपं प्रेषितवान् आसीत् खलु? सः वणिक् प्रत्यागतवान् वा इति जानीमः वा? 'शिवदाससम्बन्धि तत् धनं तस्मात् वणिकतः सङ्गृह्य नागवेण्यम्बायै दातव्यम्' इति तु अस्माकं कर्तव्यं किल?'' इति।

तदा जयेन्द्रः खेदेन उक्तवान्– ''किम् एतद्विषये अहं मौनं स्थितवान् इति चिन्तयति वा भवान्? तद्विषये विचारणा कृता एव। सः वणिक् वाणिज्ये महत् नष्टम् अनुभूतवान् इति जनाः वदन्ति। इतोऽपि सः न प्रत्यागतवान् एव। 'अवमानकारणतः बन्धुमित्रेभ्यः मुखं प्रदर्शयितुम् अनिच्छन् न प्रत्यागच्छेत् अपि' इति जनाः वदन्तः सन्ति।

जलम्..." इति वदन् आसीत्। प्रणवः पत्रपुटेन समीपस्थनदीतः जलम् आनीय पायितवान्।

जयेन्द्रः जलम् एकापोशनेन पीतवान्। तस्य नेत्रे निमीलिते। स्वरः स्पष्टतया न बहिः आगच्छति। तथापि सः कष्टेन– "भोः, अहं महापापी। इदानीं म्रियमाणः अस्मि। तस्मिन् गर्ते धनम् अस्ति। स्वीकरोतु।" इति एतावत् उक्तवान्। पुनः दीर्घं निःश्वसन् "मम प्राप्तवयस्कां पुत्रीम्...। एतत् धनम्... धनम्... शिवदासपत्न्यै..." इति कथञ्चित् उक्त्वा मौनम् आश्रितवान्।

प्रणवः जयेन्द्रस्य हस्तद्वयं दृढं गृहीत्वा– "भोः, भवतः काऽपि चिन्ता मास्तु। भवतः पुत्र्याः विवाहम् अहं निर्वर्तयिष्यामि। मयि विश्वस्य भवान् निश्चिन्तः भवतु" इति उक्तवान्।

एतत् वचनं शृण्वतः जयेन्द्रस्य मुखे सन्तोषस्य छाया प्रसृता इव। सः तृप्त्या एव प्राणान् त्यक्तवान्।

प्रणवः आश्रमं प्रत्यागत्य संन्यासिने जयेन्द्रस्य मरणं निवेदितवान्। संन्यासी स्वशिष्याणां साहाय्येन जयेन्द्रस्य अन्त्यसंस्कारं कृतवान्। गर्ते प्राप्तं धनं समग्रम् अपि लोकहितकार्यार्थं दत्तवान् प्रणवः।

अनन्तरं जयेन्द्रस्य धनेन इतरवस्तुभिः च सह प्रतिष्ठानपुरं प्रत्यागत्य सर्वं जयेन्द्रगृहे दत्तवान्। वाणिज्ये यः लाभः सम्पादितः तत्र



अर्धं भागं शिवदासस्य पत्न्यै नागवेण्यै दत्त्वा प्रवृत्तं सर्वं निवेदितवान्।

केषाञ्चित् दिनानाम् अनन्तरं प्रणवः केनचित् बन्धुद्वारा जयेन्द्रस्य पुत्र्याः परिणये इच्छां प्रकट्य वार्तां प्रेषितवान्। एतया वार्तया जयेन्द्रस्य पत्नी बहु सन्तुष्टा।

एकवर्षाभ्यन्तरे जयेन्द्रकुमार्याः प्रणवस्य च विवाहः सवैभवं सम्पन्नः। प्रणवः न्याययुतेन मार्गेण वाणिज्यं कुर्वन् सुखेन जीवितवान्।

एवं कथां समाप्य वेतालः अपृच्छत्– "राजन्! प्रणवः किमर्थं विचित्रं व्यवहृतवान्? जयेन्द्रेण गर्ते गोपितं धनं जयेन्द्रकुटुम्बीयेभ्यः किमर्थं न दत्तवान्? स्ववाणिज्येन प्राप्ते धने अर्धं शिवदासपत्न्यै

दत्तवान्, एतत् किमर्थम्? एतस्य सन्देहस्य उत्तरं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्। स्मरतु तावत्" इति।

तदा त्रिविक्रमः उक्तवान्– "शिवदासः अन्यं वणिजं स्ववज्रविक्रयणार्थं यवादिद्वीपं प्रेषितवान् इति प्रणवः जानाति। तथैव महेन्द्रपुरमहाराजाय इतरेभ्यः च शिवदासः वज्राणि विक्रीतवान् इत्यत्रापि तेन साक्ष्याधाराः दृष्टाः। गर्ते स्थापितं धनं शिवदासस्य एव इति सहजतया तर्कितवान् सः। किन्तु शिवदासस्य मरणं कथं जातम् इति सः न जानाति।

जयेन्द्रः सोमेन्द्रः च शिवदासस्य धनं परस्परं विभज्य स्वीकर्तुं चिन्तितवन्तौ आस्ताम्। किन्तु चोरभीत्या तथा न कृतवन्तौ। 'मार्गे चोराः आवयोः धनं स्वीकुर्युः चेदपि गर्तस्थं धनं पुनः प्राप्तुं शक्यते' इति तयोः विचारः आसीत्। अतः एव सोमेन्द्रः मरणसमये जयेन्द्रतः आगन्तव्यम् अस्ति इति सूचितवान्। तत्सन्दर्भे जयेन्द्रः यद्यपि निराकृतवान् तथापि आत्मनः मरणसमये तत् स्मृत्वा 'अहं महापापी' इति वदन् सर्वं व्यक्तीकृतवान् इव। अतः एव सः गर्तस्थे धने अर्धं शिवदासपत्न्यै दातुं सूचितवान् अपि।

एतत्सर्वं प्रणवः स्वविवेचनशक्त्या सम्यक् एव ऊहितवान्। गर्तस्थं धनम् अन्यायार्जितम् इत्यतः तत् स्वीकर्तुम् अनिच्छन् लोकोपकारनिमित्तं संन्यासिनः हस्ते दत्तवान्। जयेन्द्राय यत् वचनं दत्तं तस्य पालनार्थं स्वलाभे अर्धं शिवदासपत्न्यै दत्तवान्। शिवदासपुत्रीं परिणीय पूर्णतः शपथपरिपालनं कृतवान् अपि। एतस्य सर्वस्य अवलोकनेन जयेन्द्रः विचित्रं न व्यवहृतवान्, अपि तु सर्वं विविच्य धर्मयुत-मार्गेण नीतमार्गेण च व्यवहृतवान् इति स्पष्टं ज्ञायते" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



अस्माकं देशस्य वैशिष्ट्यानि –

# गोल्कोण्डदुर्गम्




इदानीन्तनस्य आन्ध्रप्रदेशस्य राजधानी हैदराबाद्, पूर्वं गोल्कोण्डराज्यस्य राजधानी, १९४७ पर्यन्तं निजां राज्यस्य राजधानी च आसीत्। हैदराबाद् नगरतः दश किलोमीटर्दूरे पश्चिमे, कृष्णशिलामये पर्वते गोल्कोण्डदुर्गं राराजते। एतस्य दुर्गस्य परिधिः ११ कि.मी.।




सुल्तान् खुली कुतुब् षा नामकः तुरुष्कराजः १५१८ तमे वत्सरे एतत् स्थलं दृष्टवान्, स्वराजधानीम् अत्र निर्मातुं निश्चितवान् च। अनन्तरं दुर्गनिर्माणकार्यम् आरब्धम्। एतस्मिन् दुर्गे वसन्तः ये शासनं कृतवन्तः ते कुतुबषाहीनाम्ना आहूताः।

एतस्य दुर्गस्य बहूनि वैशिष्ट्यानि सन्ति। प्रवेशद्वारस्य समीपे कृतः करताडनशब्दः दुर्गभित्तेः उपरि ६१ मीटर् उन्नते स्थले श्रूयते। 'सूक्ष्माणां स्फटिकशिलानां समायोजनेन एतत् साधितम्' इति जनाः तर्कयन्ति।





एतस्य दुर्गस्य भित्तौ अष्ट द्वाराणि, ७० सुरक्षामण्डपाः च सन्ति। शत्रवः अन्तः प्रवेष्टुं यथा न शक्नुयुः तथा विशिष्टैः तन्त्रैः एषा भित्तिः निर्मिता अस्ति।

दुर्गस्य सुरक्षामण्डपाः दूरतः एव दृश्यन्ते। शासकानां वसतिस्थानं पर्वतशिखरस्थम् अपूर्वं भवनं प्राप्तव्यं चेत् दुस्तरेण मार्गेण गन्तव्यं भवति।






दुर्गसमीपे कुतुब्षापालकैः निर्मितानि यवनमन्दिराणि दृश्यन्ते। द्वारशिखरैः शोभमानानि एतानि मन्दिराणि चतुष्कोणाकारकस्य आधारपीठस्य उपरि स्थितानि दृश्यन्ते। अत्र महम्मदीय-सम्प्रदायेन सहैव हैन्दवसम्प्रदायसूचकानि कमलानि कमलपत्रादीनि च दृश्यन्ते इति तु विशेषः।

गोल्कोण्डराज्यं १६७७ तमे वत्सरे स्वतन्त्रराज्यत्वेन सुप्रसिद्धम् आसीत्। तत्समये औरङ्गजेबः महता सैन्येन सह आक्रमणेच्छया तत्र आगतवान्।





औरङ्गजेबः गोल्कोण्डदुर्गं परिक्रम्य स्थितवान्। सेनयोः उभयोः मध्ये घोरं युद्धं प्रवृत्तम्। युद्धे गोल्कोण्डसेना पराजिता। विजयी औरङ्गजेबः गोल्कोण्डदुर्गं स्वशासनाधीनं कृतवान्।

एतेन गोल्कोण्डदुर्गस्य वैभवमयानि दिनानि समाप्तानि। मोगलसाम्राज्यं क्षीणदशायाम् आसीत् इत्यतः एतस्य दुर्गस्य रक्षणे तेषां शासकानाम् आसक्तिः न आसीत्। तथापि अनन्तरकाले गोल्कोण्डदुर्गे वज्रपरिष्कारकार्यम् आरब्धम्। अतः पुनरपि एतत् दुर्गं प्रसिद्धिं गतम्।






गोल्कोण्डवज्रखनीतः सुविख्यातानि बहूनि वज्राणि समुत्पन्नानि। 'महामोगल्' वज्रं १६५० तमे वत्सरे अत्र प्राप्तम्। तत् वज्रम् औरङ्गजेबः वशीकृतवान्। लण्डन्नगरे महाराज्ञ्याः वशे स्थितं कोहिनूरुवज्रं चापि गोल्कोण्डदुर्गतः एव प्रकाशतां गतम्।



# वधूस्वीकारः

पूर्वं विजयसेनः नाम राजा विदर्भदेशं पालयति स्म। तस्य राज्यपरिपालनम् अन्येषां महाराजानां कृते आदर्शरूपम् आसीत्।

विजयसेनराजस्य एकः एव पुत्रः। सुकेतुः इति तस्य नामधेयम्। यद्यपि सः राजोचितलक्षणसम्पन्नः आसीत्, तथापि न अधिकबुद्धिमान्। भाविनः महाराजस्य एतादृशीम् अन्तरङ्गपरिस्थितिं दृष्ट्वा महाराजः चिन्ताक्रान्तः अभवत्।

एकस्मिन् दिने महाराजः एतं विषयम् अधिकृत्य मन्त्रिजनैः सह पर्यालोचनं कृतवान्।

तस्य सचिवाः विषयं सम्यक् परिशील्य, सर्वे एककण्ठेन– ''प्रभो, अस्माकं युवराजः इदानीं विवाहयोग्यं वयः प्राप्तवान् अस्ति। एतस्मिन् वयसि तस्य मनः समीकर्तुं तस्य पत्नी एव समर्था भवेत्। अतः इदानीम् अस्माभिः काचन कन्या अन्वेष्टव्या या अत्यन्ततीक्ष्णबुद्धिमती, प्रतिभावती च स्यात्। तादृशीम् आनीय युवराजस्य विवाहं करिष्यामः चेत् एषा समस्या परिहृता भविष्यति।'' इति स्वाशयं प्रकटितवन्तः।

'मन्त्रिणां सूचना युक्ता अस्ति' इति चिन्तितवान् महाराजः। अतः सः ''समीचीनां कन्याम् अन्विष्य रहस्यरूपेण मां सूचयन्तु'' इति आदिश्य समर्थान् कांश्चन सेवकान् कन्यान्वेषणार्थं प्रेषितवान्।

किञ्चित्कालानन्तरं तैः चारैः प्रेषितां कन्यासम्बन्धिनीं रहस्यवार्तां महाराजः प्राप्तवान्। सपदि एव चारैः सूचितासु कन्यासु स्वाभिप्रेताम् एकां परीक्षितुं स्वयं महाराजः काशीयात्रिकः इव वेषपरिवर्तनं कृत्वा तस्याः कन्यायाः ग्रामं प्रति प्रस्थितवान्।



यदा महाराजः तं ग्राम प्राप्तवान्, तदा अन्धकारः व्याप्तः आसीत्। कन्यायाः गृहे तस्याः मातापितरौ न आस्ताम् तस्मिन् दिने। कन्यायाः नाम सुमती। सा काशीयात्रिकरूपेण समागतस्य महाराजस्य सादरसत्कारं कृतवती।

रात्रौ भोजनवेलायां विजयसेनराजः स्वीयं वज्राङ्गुलीयकं दक्षिणहस्तस्य अङ्गुलीतः सश्रमं निष्कास्य, वामहस्ते धरन् मन्दहासं प्रकटयन् सुमतीं "मां दृष्ट्वा किं वा चिन्तयेत् भवती? दक्षिणहस्ते एव अङ्गुलीयकं तिष्ठति चेत्, एतादृशः श्रमः नैव अभविष्यत् इति वदति वा?" इति उक्तवान्।

भूमौ स्थापिते पीठे श्रमपूर्वकम् उपविशन्तं महाराजं दृष्ट्वा सुमती अन्नं परिवेषयन्ती– "दक्षिणः वामः भवति चेत् कष्टम् अनुभोक्तव्यम् एव। स्थानपरिवर्तनेन एवमेव भवति। सर्वदा यः हंसतूलिकातल्पे शयनं करोति, सः एतादृशकर्कशपीठे उपवेशनसमये महत् कष्टम् अनुभवति एव। किञ्चित् अभ्यासानन्तरं कष्टं न प्रतीयते" इति उक्तवती।

महाराजः तस्याः वचनस्य अन्तरार्थं जानन्– "एवं तर्हि सर्वापेक्षया स्वीयाः अनुभवाः एव कष्टदायकाः इति भवती वदति वा?" इति पृष्टवान्।

तदा सुमती स्मयमाना– "ततोऽपि कष्टतरम् अन्यत् अस्ति स्वामिन्!" इति उक्तवती।

तत् किम् इति ज्ञातुम् इच्छन् महाराजः कुतूहलं प्रकटयन्– "तत् किं स्यात्? वदतु भवती" इति पृष्टवान्।

"सर्वापेक्षया किंवदन्ती एव अत्यन्तकष्टदायिका" इति उक्तवती सुमती।

"किंवदन्ती वा? वस्तुतः सा कीदृश कष्टम् उत्पादयेत्?" इति पृष्टवान् महाराजः।

"मम वचनं नितरां सत्यम् अस्ति। किंवदन्तीः यः विश्वसिति, तस्य विचक्षणाज्ञानं, तार्किकशक्तिः च नश्यति। तदा सः असत्यं सत्यम् इति चिन्तयति। सत्यं च असत्यम् इति" इति उत्तरितवती सुमती।

साधारणकुटुम्बे जन्म प्राप्तवत्याः

सुमत्याः यादृशी बुद्धिशक्तिः अस्ति, तादृशी बुद्धिशक्तिः स्वीयकुमारस्य सुकेतोः नास्ति इति स्मरतः महाराजस्य मनसि तस्याः उपरि ईर्ष्या उत्पन्ना।

घृत परिवेषयन्ती सुमती महाराजस्य मुखभावं परीक्षमाणा– "मानवस्य कष्टदुःखादीनां मूलकारणं ज्ञायते चेत्, कष्टानाम् अर्धभागः परिहृतः भवति। तदा सर्वे अपि सामान्यतया सुखं जीवितुं शक्नुवन्ति" इति उक्तवती।

तस्याः वचनस्य भावं ज्ञातुम् अपेक्षमाणः विजयसेनराजः– "तथाविधं मूलकारणम् किम् इति कथयति वा?" इति पृष्टवान्।

"मनुष्येषु अर्धसङ्ख्याकजनानां पीडाकारः ईर्ष्यागुणः अथवा असूया। एतेन कारणेन एव स्वेषु अविद्यमानं गुणम् अन्येषु दृष्ट्वा जनाः ईर्ष्यायुक्ताः भवन्ति। सा ईर्ष्या परोक्षवह्निः इव तान् जनान् निरन्तरं दहति" इति उत्तरं दत्तवती सुमती।

अनन्तरं महाराजः मौनं स्थित्वा भोजनं समापितवान्। सः उत्थाय हस्तं क्षालयितुं बहिः गच्छन् "एतत् तमः किमर्थम् एतावत् गाढं स्यात्?" इति पृष्टवान्।

सुमती महाराजाय जलं ददती– "एतत् तमः गाढम् एव अस्ति। तथापि अशुद्ध्यपेक्षया कृष्णं नास्ति खलु?" इति उक्तवती।

विजयसेनराजस्य तस्याः वचनस्य अर्थबोधः न अभवत्। आश्चर्यचकिताय तस्मै सुमती ताम्बूलं यच्छन्ती "महाराज! कृपया एषा क्षन्तव्या। बालभावेन अहं किमपि किमपि प्रलपितवती" इति



उक्तवती।

"अहं वेषान्तरं धृतवान् अस्मि। तथापि एषा अहं महाराजः इति कथं ज्ञातवती?" इति विचिन्तयन् विजयसेनः सुमतीम् एव तं विषयं कथयितुं पृष्टवान्।

"भवान् काशीं गच्छन् यात्रिकः इति उक्तवान्। तावद्दूरं एकाकी कोऽपि प्रयाणं न करोति। तेन सह अन्ययात्रिकाः अवश्यं भवन्ति। अतः भवान् न काशीयात्रिकः इति अहम् ऊहितवती" इति उक्तवती।

"समीचीनम्। अहं महाराजः इति विचारं भवती कथं ज्ञातवती? अन्यः कोऽपि कथं न?" इति पृष्टवान् विजयसेनः।

"भवान् यदा भोजनार्थं भूमिस्थपीठे उपविष्टवान्, तदा भवतः श्रमं दृष्ट्वा अधः उपविश्य भोजनं कर्तुम् अभ्यासः नास्ति इति ज्ञातवती। अनन्तरं भवान् दक्षिणहस्ते स्थितं वज्राङ्गुलीयकं वामहस्ते स्थापितवान्। तस्मिन् समये दीपस्य प्रकाशे अङ्गुलीयकस्य चाकचक्यतां लक्षयित्वा भवान् कोऽपि महाधनवान् इति तर्कितवती। किन्तु अन्ते........" इति वदन्ती सुमती तूष्णीम् अभवत्।

विजयसेनराजः हसन् "किमर्थं तूष्णीम् स्थितवती? वदतु, वदतु वत्से। भवत्याः वचनानि शृण्वन् अहम् आनन्दितः अस्मि" इति उक्तवान्।

"महाराज! इदानीम् अहं यत् वचनं वदामि, तदर्थं मां क्षाम्यतु। राज्यपालेषु सामान्यतः ईर्ष्यासूयादयः अवश्यं भवन्ति इति मया श्रुतम् अस्ति। मम चतुरवचनानि शृण्वतः भवतः मुखे जातं भावव्यत्यासं दृष्टवत्याः मम अभिप्रायः दृढः अभवत्" इति उक्तवती सुमती।

सुमत्याः बुद्धिशक्त्या, समयस्फूर्त्या, आदरभावादिसद्गुणैः च महाराजः आकृष्टः। एषा एव मम स्नुषा भवितुं योग्या इति तस्य विश्वासः अभवत्।

तस्याः मातापितरौ यदा प्रत्यागतवन्तौ, तदा विवाहप्रस्तावं कृतवान् महाराजः। गतेषु केषुचिदेव दिनेषु युवराजेन सुकेतुना सह सुमत्याः विवाहः सवैभवं प्राचलत्।





# उत्तररामायणम्

यद्यपि कार्तवीर्यार्जुनेन रावणः बद्धः, अनन्तरं पुलस्त्यद्वारा यथाकथञ्चित् बन्धविमोचनं प्राप्तवान्, तथापि तस्य दुरहङ्कारस्य लेशः अपि न अपगतः। कार्तवीर्यार्जुनस्य स्नेहेन अहं पूर्वापेक्षया बलवत्तरः जातः अस्मि इति चिन्तयन्, महता गर्वेण लोके सर्वत्र सञ्चरन्, बलिष्ठान् राक्षसान् मानवान् च युद्धार्थम् आह्वयन् आसीत् सः। रावणस्य आगमनवार्ताश्रवणेन एव सर्वे भीत्या कम्पन्ते स्म।

एवं हि सति कदाचित् सः किष्किन्धानगरं गत्वा, तस्य महाराजं वालिनं युद्धार्थम् आहूतवान्।

तदा वालिनः सचिवः तारः रावणम् उद्दिश्य– "इदानीम् अस्माकं महाराजः वाली किष्किन्धानगरे नास्ति। सः चतसृषु दिक्षु अपि समुद्रतीरेषु सन्ध्यावन्दनम् आचरितुं गतवान्। तत्र वर्तमानम् अस्थिराशिं पश्यतु। वालिना ये ये हताः, तेषाम् अस्थ्नां राशिः सः। यदि भवान् अपि तस्मिन् राशौ प्रवेशम् इच्छति, तर्हि किञ्चित् प्रतीक्षां करोतु। वाली शीघ्रम् एव आगमिष्यति। यदि अत्यधिका त्वरा अस्ति, तर्हि दक्षिणसमुद्रतीरं गच्छतु। तत्रैव वालिनः दर्शनं भविष्यति, सः भवन्तं नामावशेषं करिष्यति च" इति उक्तवान्।

तारस्य उद्धतवचनानि श्रुत्वा रावणः महता क्रोधेन तं भर्त्सयित्वा, स्वीयं पुष्पकविमानम् आरुह्य, दक्षिणसमुद्रतीरं प्रति धावितवान्।

तत्र ध्यानमग्नं मेरुपर्वतसदृशं वालिनं रावणः दृष्टवान्। नेत्रे निमील्य जपनिरतः वाली, मध्ये मध्ये नेत्रे उन्मील्य अञ्जलिना समुद्रजलम् उन्नीय सूर्याय श्रद्धया अर्घ्यं ददाति स्म।

वालितः किञ्चित् दूरे एव रावणः पुष्पकविमानात् अवतीर्य, तस्य पृष्ठभागे स्थित्वा तस्य उपरि आक्रमणं कर्तुम् इच्छन्, मन्दं मन्दं वालिनः समीपं गतवान्।

तदा वाली समुद्रजले रावणस्य प्रतिबिम्बं दृष्ट्वा, सहसा परिवृत्य रावणं दृष्ट्वा, तस्य उद्देशं ज्ञात्वा अपि अजानन् इव तूष्णीं स्थितवान्।

यदा रावणः अतिसमीपम् आगतवान्, तदा यथा गरुडः सर्पं सवेगं गृह्णाति, तथा वाली रावणं सहसा प्रगृह्य, स्वीयकक्षे तं बद्ध्वा, आकाशं प्रति उड्डीय गतवान्। तेन रावणः तथा बद्धः आसीत्, यत् केवलं रावणस्य पादौ केवलं किञ्चित् इव चलितवन्तौ।

रावणं विमोचयितुं तस्य सचिवाः आक्रोशं कुर्वन्तः वालिनः पृष्ठतः धावितवन्तः। किन्तु वाली एतादृशवेगेन गच्छन् आसीत् यत् ते तम् अनुसर्तुम् अपि असमर्थाः अभवन्। अतः ते निरुपायाः खेदेन प्रतिनिवृत्ताः।

रावणं स्वीयकक्षे संस्थाप्य ततः प्रस्थितः वाली डयमानः एव पश्चिमसमुद्रतीरं समागत्य, तत्र स्नात्वा अर्घ्यदानसहितं सन्ध्यावन्दनं समाप्य ततः पूर्वसमुद्रतीरं गतवान्। एवंरीत्या समुद्रतीरेषु सर्वेषु स्नानं, सन्ध्यावन्दनम् अर्घ्यदानादिकं सर्वं समाप्य, कक्षे स्थितं रावणम् अगणयन् एव



किष्किन्धानगरं प्रत्यागतवान्।

किष्किन्धायाः उद्यानवने रावणम् अधः अवतार्य– "किं भोः रावण! कुतः आगच्छन् अस्ति?" इति हसन् पृष्टवान् वाली।

रावणः क्षमां याचमानः वालिनं "भवत्सदृशं बलिष्ठं, वेगवन्तं च यस्मिन् कस्मिन् अपि लोके अद्यावधि अहं न दृष्टवान्। मादृशं वीरं गृहणन् एव डयमानः चतुरः समुद्रान् अपि लङ्घयितुं समर्थः अस्ति भवान्। भवतः शक्तिः अपूर्वा, अपरिमिता, असामान्या च। अतः अहम् अग्निं साक्षीकृत्य भवतः मैत्रीं सम्पादयितुम् इच्छामि" इति उक्तवान्।



वाली तस्य वचनम् अङ्गीकृत्य अग्निम् उत्पादितवान्। अनन्तरं द्वौ अपि परस्परम् आलिङ्गनपूर्विकां मैत्रीं प्राप्तवन्तौ।

एवं भ्रातृस्नेहं प्राप्य रावणः एकमासं यावत् किष्किन्धानगरे स्थित्वा सोदरप्रीतिं आदरातिथ्यं च अनुभूतवान्। अनन्तरं रावणस्य सचिवाः समागत्य रावणं लङ्कां नीतवन्तः।

अगस्त्यः एतं वृत्तान्तं रामं कथयित्वा "राम, भवता एकेन एव बाणेन यः वाली हतः, सः कीदृशः बलवान् इति ज्ञातं खलु?" इति उक्तवान्।

तस्य वचनं श्रुत्वा रामः– "अगस्त्यमहर्षे, वालिनः बलं तु अपूर्वं, तथा रावणस्य च इति अहं अङ्गीकरोमि। किन्तु मम तु एवं प्रतिभाति यत् एतयोः अपेक्षया हनूमान् एव अधिकबलवान् इति। सः न केवलं शतयोजनपरिमितं समुद्रं लङ्घितवान्, अपि तु रावणस्य अन्तःपुरं लीलया एव प्रविश्य, अनेकान् राक्षसवीरान् एकाकी एव हतवान्, लङ्कानगरं च दग्धवान्। तेन कृतानि एतानि साहसकार्याणि त्रिषु लोकेषु अपि केनापि कर्तुम् अशक्यानि एव। एतादृशबलवान् अपि हनूमान् वालिनः हननं कृत्वा स्वीयप्रभोः सुग्रीवस्य कष्टं किमर्थं न परिहृतवान् इति मम संशयः अस्ति। कृपया मम एतस्य सन्देहस्य परिहारं वदति वा?" इति प्रार्थितवान्।

रामस्य वचनं श्रुत्वा अगस्त्यः– "भोः रामचन्द्र, भवता कथिताः हनूमतः विचाराः



सर्वे यथार्थाः एव। हनूमत्सदृशः बलवान्, वेगवान्, बुद्धिमान् च अन्यः कोऽपि न स्यात्। सः बाल्यकाले एव अनेकानि अद्भुतकार्याणि कृतवान्। प्रायः तेषां स्मरणं तस्य न स्यात्। तादृशविस्मरणं भवतु इति तस्य बाल्यकाले एव मुनयः तं शप्तवन्तः। तां विचित्रकथां श्रावयामि, शृणोतु'' इति हनूमतः जन्मादिवृत्तान्तं वर्णितवान्।

हनूमतः पिता केसरिः मेरुपर्वतराज्यस्य पालकः। केसरेः पत्नी अञ्जनादेवी वायुदेवस्य अनुग्रहेण हनूमन्तं प्रसूतवती। नवजातशिशुं हनूमन्तं सा एकत्र शाययित्वा, फलानि आनेतुं समीपस्थं वनं गतवती।

अत्रान्तरे हनूमान् बुभुक्षापीडितः सन् रोदितुम् आरब्धवान्। तस्मिन् समये पूर्वस्यां दिशि पर्वतस्य उपरि रक्तवर्णीयस्य सूर्यबिम्बस्य उदयः अभवत्। तत् सूर्यमण्डलं फलम् इति चिन्तयन् बालहनूमान् तत् ग्रहीतुम् आकाशं प्रति उत्प्लुत्य सूर्यं प्रति गन्तुं प्रवृत्तवान्।

सूर्यं प्रति धावन्तं स्वीयपुत्रं दृष्ट्वा, वायुदेवः स्वयम् अपि पुत्रस्य पृष्ठतः धावन्, तस्य शिशोः सूर्यकिरणैः परितापः यथा न भवेत् तथा तस्य उपरि हिमकणान् सिञ्चन् गच्छति स्म। एवंरीत्या स्वसमीपम् आगच्छन्तं शिशुं रक्षितुं सूर्यः अपि स्वीयम् उज्ज्वलतापं महता प्रयत्नेन न्यूनीकुर्वन् आसीत्।

यदा हनूमान् सूर्यस्य समीपं गतवान्, तदा एव राहुः सूर्यं ग्रहीतुं सूर्यरथस्य समीपम् आगतवान्।

राहोः दर्शनसमनन्तरम् एव हनूमान् नूतनवस्तुनः ग्रहणकुतूहलेन राहुं ग्रहीतुं तं प्रति प्रस्थितवान्।

एतेन भ्रान्तः राहुः भीत्या धावित्वा इन्द्रस्य सभां प्रविश्य, तत्र इन्द्रं–''भोः इन्द्र! किम् इदम् अधर्माचरणम्? एषः पर्वकालः मम अधिकारकालः इति अहं सूर्यं गिलितुं गतवान्। किन्तु भवान् अन्यं राहुं किमर्थं तत्र प्रेषितवान्? सः तु मां सूर्यं च युगपत् एव गिलितुं प्रयतमानः अस्ति। किमिदं वैपरीत्यम्?'' इति पृष्टवान्।

आश्चर्यचकितः इन्द्रः झटिति ऐरावतम्

आरुह्य राहुणा सह सूर्यस्य समीपम् आगतवान्। तदानीम् अपि तत्रैव परिभ्रमन् बालहनूमान् राहुं दृष्ट्वा झटिति हस्तं प्रसार्य तं ग्रहीतुम् आगतवान्।

"भयं मास्तु। पश्यतु, एतम् इदानीम् एव मारयामि।" इति इन्द्रः राहुं वदन् एव आसीत्। तदा हनूमान् श्वेतवर्णीयम् ऐरावतं दृष्ट्वा, किमपि श्वेतं फलं स्यात् इति तं प्रति धावितवान्।

एतत् दृष्ट्वा इन्द्रः स्वीयहस्ते स्थितेन वज्रायुधेन तं ताडयितुं यदा प्रवृत्तः, तदा सः कश्चन शिशुः इति ज्ञात्वा, मन्दं ताडयन् 'दूरं गच्छतु' इति तं सूचितवान्।

इन्द्रस्य ताडनेन बालः हनूमान् कस्यचित् पर्वतस्य शिखरे पतितवान्। एतेन तस्य वामहनुः जर्झरितः अभवत्। तत्रैव मूर्च्छां गतवान् च।

स्वीयपुत्रस्य एतादृशीं दुरवस्थां दृष्ट्वा वायुदेवः क्रुद्धः अभवत्। अतः सः लोकसञ्चारकार्यं परित्यज्य, स्वीयपुत्रम् उन्नीय कस्यचित् पर्वतस्य गुहां प्रविश्य तत्रैव उपविष्टवान्। तदा त्रिषु लोकेषु वर्तमानाः समस्तप्राणिनः श्वासोच्छ्वासशून्याः सन्तः अत्यन्तं परितप्ताः।

सर्वे देवाः, गन्धर्वाः, मुनयः च धावन्तः ब्रह्मणः समीपं गत्वा, प्रपञ्चस्य उपरि आपतितं कष्टं निवेदितवन्तः। ब्रह्मदेवः तैः सर्वैः सह वायुदेवस्य गुहायाः समीपम् आगतवान्।

समागतानां ब्रह्मादीनां दर्शनसमनन्तरम् एव वायुदेवः स्वपुत्रम् उन्नीय बहिः आगत्य, ब्रह्मणः पादयोः उपरि पतितवान्। ब्रह्मा






हनूमतः जलविपत्तिः मास्तु इति वरेण वरुणः, कालदण्डेन मरणं न भवेत् इति वरेण यमः, गदाभिः अपायः मास्तु इति वरेण कुबेरः च अनुगृहीतवन्तः।

स्वेन वा स्वीयैः अस्त्रैः वा कोऽपि अपायः मास्तु इति शिवः आशीर्वचनम् उक्तवान्। ब्रह्मा, विश्वकर्मा च विविधैः वरैः हनूमन्तम् अनुगृहीतवन्तौ।

एतादृशैः वरैः हनूमान् शत्रूणां कृते भयङ्करः अभवत्। युद्धे सः अजेयः अभवत्। सः कामरूपः कामगमनशक्तिमान् च जातः। एतत् सर्वं दृष्ट्वा वायुदेवः अपरिमितं सन्तोषं प्राप्तवान्।

यदा अचेतनं हनूमन्तं स्पृष्टवान्, तदा बालः हनूमान् पुनः पूर्वावस्थां प्राप्तवान्। ब्रह्मणः अनुग्रहेण वायुदेवः शान्तः भूत्वा स्वीयं लोकसञ्चारकार्यं पुनः आरब्धवान्। तदा सर्वे प्राणिनः पुनः उज्जीविताः।

पुनः वायुदेवं सन्तोषयितुम् इच्छन् ब्रह्मा दिक्पालकान् हनूमते वरान् दातुं सूचितवान्। वायुपुत्रस्य हनोः घातस्य कारणीभूतः इन्द्रः शिशुं हनूमान् इति नाम्ना आहूय, वज्रायुधस्य आघातेन तस्य कोऽपि हानिः यथा न भवेत् तथा अनुगृहीतवान्। सूर्यः स्वीयतेजसः एकं भागं हनूमते प्रदाय, महापण्डितः उत्तमवक्ता च भवतु इति वरेण तम् अनुगृहीतवान्।

एवंरीत्या अपारबलसम्पन्नः हनूमान् निर्भयेन सर्वत्र सञ्चरन्, स्वीयाभिः बालचेष्टाभिः आश्रमवासिनः मुनिजनान् पीडयितुम् आरब्धवान्। सः देवताभिः विविधवरान् प्राप्तवान् अस्ति इति ते सर्वे जानन्ति स्म।

बालस्य हनूमतः उपद्रवैः मुनीनां वल्कलवस्त्राणि, पात्राणि, कृष्णाजिनानि, अग्निहोत्रादयः सर्वे ध्वस्तानि भवन्ति स्म। तथापि मुनयः अपश्यन्तः इव सर्वाः यातनाः सहन्ते स्म।

हनूमतः उपद्रवान् दृष्ट्वा खिन्नः केसरिः, अञ्जनादेवी, वायुदेवः च "तथा न करोतु" इति तं बहुधा बोधितवन्तः। तथापि हनूमान् स्वीयं परपीडनस्वभावं नैव त्यक्तवान्।

अन्ते तस्य उपद्रवान् सोढुम् असमर्थाः महर्षयः "रे बाल! स्वीयबलस्य परिज्ञानम् अस्ति इति कारणेन खलु भवान् एतादृशं दौष्ट्यम् आचरति? यावत् अन्यः न स्मारयिष्यति, तावत् भवतः स्वीयबलस्य विस्मरणं भवतु" इति तं हनूमन्तं कोपेन शप्तवन्तः।

तदारभ्य हनूमान् स्वीयं बलपराक्रमादिकं विस्मृतवान्। आत्मानं सर्वसाधारणं मन्यमानः, साधुपुरुषः भूत्वा, मुनीनां मध्ये भयभक्तिविनयादिभिः व्यवहरन्, आश्रमवासिनां सेवां कर्तुम् आरब्धवान्।

तस्मिन् काले वालिसुग्रीवयोः पिता ऋक्षरजाः वानराणां राजा आसीत्। यदा सः कालवशः अभवत्, तदा वानराः ज्येष्ठं वालिनं पट्टाभिषिक्तं कृतवन्तः। तस्य अनुजस्य सुग्रीवस्य युवराजपट्टाभिषेकः अभवत्।

हनूमतः सुग्रीवस्य च मध्ये बाल्यात् आरभ्य मैत्री आसीत्। अनन्तरं यदा वालिसुग्रीवयोः मध्ये वैरम् उत्पन्नं, तदा सुग्रीवः वालिनः पीडातः आत्मानं रक्षन्, अनेकत्र सञ्चरन्, बहुविधकष्टानि अनुभूतवान्। तस्मिन् समये हनूमतः स्वीयबलस्य परिचयः न आसीत्। अतः सर्वसमर्थे मित्रे स्थिते अपि ततः किमपि साहाय्यं सुग्रीवः न लब्धवान्।

इत्थं हनूमतः वीरकथानकम् अगस्त्यः रामं कथयित्वा "रामचन्द्र, हनूमान् यादृशबलवान् इति भवता भावितः अस्ति, वस्तुतः ततोऽपि सः अभिकशक्तिमान् अस्ति। सः व्याकरणशास्त्रं सम्यक् अध्येतुं सूर्येण सह उदयगिरितः अस्ताचलपर्यन्तं अटितवान्। यस्यां कस्याम् अपि विद्यायां हनूमतुसमः कोऽपि नास्ति। सः भविष्यत्कालीनः ब्रह्मा अपि भवति" इति उक्तवान्।

हनूमतः कथायाः श्रवणेन तृप्तः रामः अगस्त्यमहामुनिं "स्वामिन्। वालि-सुग्रीवयोः पिता ऋक्षरजाः कः? तस्य माहात्म्यं किम्? तस्य माता का? कृपया एतान् विषयान् वदति चेत्, श्रुत्वा सन्तोषं प्राप्नोमि" इति प्रार्थितवान्।





# अनर्थकः द्वेषः

बहुभ्यः वर्षेभ्यः पूर्वं मलयपर्वतप्रान्ते मारदेवः नाम प्रसिद्धः ऐन्द्रजालिकः आसीत्। सः अनेकविधाः मन्त्रविद्याः जानाति। तथापि सः धनार्जनार्थम् एतस्याः विद्यायाः उपयोगं न करोति।

मारदेवस्य लवनामकः पुत्रः आसीत्। 'अधीता विद्या मया सह एव जीर्णा न भवेत्' इति चिन्तयन् मारदेवः पुत्रं सर्वाः विद्याः पाठितवान्।

लवः स्वभावेन भिन्नः एव। विद्यायाः आधारेण धनं कीर्तिः च सम्पादनीया इति तस्य प्रबला इच्छा। अतः सः एकदा स्वग्रामं त्यक्त्वा देशविदेशं प्रति प्रस्थितवान्। बहवः राजानः तदीयम् इन्द्रजालकौशलं दृष्ट्वा सन्तोषम् अनुभवन्तः पारितोषिकाणि दत्तवन्तः आसन्।

एवं देशाटनं कुर्वन् लवः तोरणदेशं प्राप्तवान्। तत्र महाराजं दृष्ट्वा– "अहम् ऐन्द्रजालिकः। मम विद्याकौशलं दृष्ट्वा बहवः राजानः सन्तोषं प्रकटितवन्तः। अत्रापि मम कौशलप्रदर्शनार्थम् अवकाशः दातव्यः" इति विज्ञापितवान् लवः।

बहोः कालतः निस्सन्तानस्य तोरणदेशमहाराजस्य गतवर्षे एव एकः पुत्रः जातः आसीत्। पुत्रस्य जन्मकुण्डलीं दृष्ट्वा ज्यौतिषिकः उक्तवान् आसीत् यत् एतस्य द्वितीये वर्षे कस्माच्चित् ऐन्द्रजालिकतः हीनयोगप्राप्तिः अस्ति इति। तदारभ्य राजा ऐन्द्रजालिकदर्शनतः भीतः भवति स्म।

इदानीम् उपस्थितस्य लवस्य दर्शनतः अपि राजा भीतः अभवत्। यतः तदीयस्य कुमारस्य द्वितीयवर्षप्रवेशानन्तरं मासद्वयम् अपि न अतीतम् आसीत्।

'कुतश्चित् आगतात् एतस्मात् ऐन्द्रजालिकतः एव कोऽपि अपायः भविष्यति। ज्यौतिषिकस्य वचनं सत्यम् एव सम्पन्नम्'' इति चिन्तयन् राजा मन्त्रिणा सह रहसि वार्तालापं कृतवान्। 'एतस्य

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



ऐन्द्रजालिकस्य समापने कोऽपि उपायः चिन्तनीयः' इति सूचितवान् च।

एतदनुगुणं मन्त्री लवम् एकान्ते आहूय– "इन्द्रजालविद्यायाम् अस्माकं महाराजस्य विशेषरुचिः। अतः सः भवदर्थं विशेषभोजनकूटस्य व्यवस्थार्थम् आज्ञापितवान् अस्ति। अद्य भवता महाराजस्य भोजनालये एव आतिथ्यं स्वीकरणयम्। भवतः कौशलप्रदर्शनार्थं श्वः व्यवस्था क्रियते" इति निवेदितवान्।

लवः तु अतीव सन्तुष्टः। रात्रौ सः महाराजेन सह भोजनं कृतवान्। भोजने तीव्रं विषं मिश्रितम् आसीत् इत्यतः सूर्योदयतः पूर्वम् एव सः गतप्राणः जातः। मन्त्री तस्य शवं विश्वासार्हसेवकानां द्वारा श्मशानं प्रापितवान्।

एतत् कार्यं यद्यपि रहसि एव प्रवृत्तं, तथापि प्रसिद्धः ऐन्द्रजालिकः कश्चन अदृश्यतां गतः इति विविधाः किंवदन्तीः तु प्रसृताः एव। 'सः दारुणं मरणं प्राप्तवान्' इति तु निश्चितम् अभवत्। केषुचित् मासेषु एषा वार्ता मारदेवेन अपि श्रुता। 'पुत्रस्य मरणं वस्तुतः जातं वा न वा' इति ज्ञातुं सः स्वयं प्रस्थितः सन् तोरणदेशं प्राप्तवान्। तोरणदेशे बहवः लवस्य आगमनं जानन्ति स्म। किन्तु आगतस्य तस्य का गतिः जाता इति कोऽपि न जानाति। 'राजभवनं प्रति आहूय तं मारितवन्तः' इति वार्तां तु बहवः श्रावितवन्तः।

मारदेवः वस्तुतः स्वभावेन साधुः। किन्तु विना कारणं राजा लवं मारितवान् इति ज्ञातवतः तस्य मनसि तीव्रः द्वेषः उत्पन्नः।

कदाचित् सः दासीभिः विहारार्थम् उद्यानं नीयमानं राजकुमारं दृष्टवान्। झटिति सः कार्ये उद्युक्तः अभवत्। ऐन्द्रजालिकविद्यया दासीः वञ्चयित्वा सः राजकुमारम् उन्नीय स्वदेशं गतवान्। राजकुमारस्य वस्त्राभरणादीनि एकस्यां पेटिकायां स्थापितवान्। तं बालकं पुत्रवत् प्रीत्या पालितवान्।

'पुत्रं कोऽपि अपहृत्य गतवान्' इति ज्ञात्वा तोरणदेशस्य राजा अतीव निराशः। 'मया स्वीकृता पूर्वजागरूकता अपि व्यर्था जाता किल?' इति चिन्तयन् सः दुःखसागरे

पतितवान्।

'पुण्यवशात् जातः अद्वितीयः पुत्रः अपि अदृश्यतां गतः' इति चिन्तयन्तं शयनम् आश्रितवन्तं महाराजं मन्त्री उक्तवान्– ''महाराज! एवं दुःखितेन भवता आरोग्यं न उपेक्षणीयम्। यत् भवितव्यम् आसीत् तत् जातम् एव। वयम् अत्र असहायाः संवृत्ताः। कश्चित् ऐन्द्रजालिकः एव राजकुमारम् अपहृतवान् स्यात्। वयं यं युवकम् ऐन्द्रजालिकं मारितवन्तः तस्य पिता समीपबन्धुः वा स्यात् सः। तं युवकं मारयन्तः वयम् एव स्वयम् आपदं स्वागतीकृतवन्तः। ज्योतिषिकेण राजकुमारस्य प्राणापायः अस्ति इति तु न उक्तम्। 'हीनयोगप्राप्तिः अस्ति' इति एतावदेव उक्तम्। अतः राजकुमारः पुनः अपि अस्माभिः प्राप्येत इति विश्वसिमः वयम्'' इति।

लवः मरणसमये षोडशवर्षीयः आसीत्। अतः मारणदेवः, राजकुमारः यावत् षोडशवर्षीयः भवेत् तावत् तं पालितवान्। अनन्तरं राजपुत्रेण सह तोरणदेशं प्राप्य कस्याञ्चित् धर्मशालायां स्थितवान्। अनन्तरदिने राजकुमारम् उक्तवान् च– ''पुत्र! एतां पेटिकां स्वीकृत्य गत्वा भवान् महाराजस्य दर्शनं प्राप्नोतु। यदा भवान् बालः आसीत् तदा भवतः अग्रजः अत्र आगतः आसीत्। तत्सन्दर्भे एषः तोरणदेशराजः तं विशेषतः सत्कृतवान् आसीत् अपि। तदर्थम् एषा पेटिका समर्प्यते



इत्यपि वदतु भवान्'' इति।

तदा सः राजपुत्रः आश्चर्येण– ''मम अग्रजः अपि आसीत् वा? इतःपूर्वं न उक्तवान् एव भवान्!'' इति उक्तवान्।

''मया यथा उक्तं तथा आचरतु भवान्। तदा भवान् स्वयम् एव अग्रजविषये सर्वं जानाति'' इति उक्तवान् मारदेवः।

राजकुमारः पेटिकां स्वीकृत्य महाराजस्य दर्शनार्थं गतवान्। महाराज नमस्कृत्य– ''महाराज! अहं मारदेवनामकस्य ऐन्द्रजालिकस्य पुत्रः अस्मि। बहुभ्यः वर्षेभ्यः पूर्वम् इन्द्रजालविद्यां प्रदर्शयितुम् आगतं मम अग्रजं भवान् सत्कृत्य पारितोषिकादीनि दत्तवान् इति श्रुतम्। तस्य प्रतिफलरूपेण मम पिता भवदर्थम् एतां पेटिकां प्रेषितवान्''

इति उक्तवान्।

राजा पेटिकाम् उद्घाटितवान्। तत्र अदृश्यतां गतस्य राजकुमारस्य बाल्यसम्बन्धीनि वस्त्राणि आभरणानि च आसन्। एतानि दृष्ट्वा राजा क्षणकालं स्तब्धः।

अनन्तरं शोकातिरेकेण कोपेन च कार्याकार्यविवेकं विस्मृतवान् सः। क्रोधावेशेन खड्गम् आकृष्य यदा सः तं युवकं हन्तुम् उद्युक्तः तदा मन्त्री तं तस्मात् कार्यात् निवारयन् उक्तवान्– "प्रभो! त्वरा मास्तु। एतानि राजकुमारीयानि वस्तूनि इति तु सत्यम् एव। किन्तु ऐन्द्रजालिकः राजकुमारं वस्तुतः मारितवान् यदि स्यात् तर्हि तदा एव एतानि भवत्समीपम् अप्रेषयिष्यत्। एषः तरुणः तु राजकुमारः इव भाति किल" इति।

अनन्तरं राजा शान्तः सन् पेटिकायां स्थितानि वस्तूनि एकैकशः बहिः आनीतवान्। तदा पेटिकायां सर्वेषां वस्तूनाम् अधः एका चीटिका आसीत्। तत्र लिखितम् आसीत् – "राजन्! एतस्याः चीटिकायाः प्राप्तेः पूर्वं भवान् स्वहस्ततः एव स्वपुत्रं मारितवान् भवेत्। भवान् मम पुत्रं यत् मारितवान् तस्य प्रतीकारः एवं साधितः मया" इति।

'मन्त्री मां निवारितवान् यदि न स्यात् तर्हि अहं मम पुत्रम् एव स्वहस्तेन मारितवान् स्याम्। तदा मारदेवः यथा चिन्तितवान् तथा एव अभविष्यत्' इति चिन्तयतः महाराजस्य नेत्राभ्याम् आनन्दाश्रूणि आगतानि। सः पुत्रं प्रीत्या दृढम् आलिङ्गितवान्।

अनन्तरं राजा सेवकान् सम्प्रेष्य धर्मशालायां स्थितं मारदेवम् आनायितवान्। "विधिलिखितम् अन्यथाकर्तुं प्रयतमानः अहं भवतः पुत्रम् अविवेकेन मारितवान्। मां क्षाम्यतु। तस्य फलरूपेण एतावत्पर्यन्तं पुत्रवियोगदुःखम् अनुभूतवान् अपि" इति वदन् मारदेवस्य क्षमां प्रार्थितवान् सः। राजकुमारस्य अपेक्षानुगुणं मारदेवं स्वकीये आस्थाने नियोजितवान् च।





# प्रतिवचनम्

पूर्वं कस्यचित् राज्ञः काचित् कुमारी आसीत्। सा वचने शूरा वाचाला। तां वचनैः जेतुं कोऽपि न शक्नोति। अतः राजा प्रकटितवान् यत् यः मम पुत्रीं वचनैः जेष्यति तस्मै सा अर्धराज्यं च दीयते इति।

राजकुमारीं परिणेतुम् इच्छन्तः अर्धराज्याशया बहवः असमर्थाः अपि राजभवनम् आगतवन्तः। अनधिकारिणाम् आगमनस्य निवारणार्थं राजा पुनः प्रकटितवान् यत् यः पराजयं प्राप्नुयात् सः तप्तायःशलाखारेखया दण्ड्यते इति। एतेन आगन्तॄणां सङ्ख्या न्यूना जाता।

राजकुमारीविवाहवार्तां श्रुत्वा तां परिणेतुम् इच्छन्तः त्रयः सहोदराः अपि गृहात् प्रस्थिताः। यदि अर्धं राज्यं लभ्येत तर्हि सुखेन जीवितुं शक्यते इति तेषां विचारः।

मार्गे तैः कश्चन पक्षी दृष्टः। कनिष्ठः तम् उन्नीय– "मया किं प्राप्तम् इति पश्यन्तु" इति सन्तोषेण उक्तवान्।

"किमर्थं भोः, तं पक्षिणं गृहीतवान्? त्यजतु" इति उक्तवन्तौ अग्रजौ।

"कदाचित् उपयोगाय भवेत्" इति वदन् तं पक्षिणं सुरक्षितं स्थापितवान् अनुजः।

किञ्चिद्दूरं गमनानन्तरं रज्जुः काचित् तृतीयेन लब्धा। अग्रजौ तां क्षेप्तुम् उक्तवन्तौ। तथापि स्वीकृतवान् सः अनुजः।

एवं मार्गे तेन अनुजेन एकः दण्डः, कश्चन घटकर्परः, मेषस्य शृङ्गद्वयं, प्राचीना पादरक्षा च प्राप्ताः।

राजभवनस्य प्राप्तेः अनन्तरं ज्येष्ठः राजकुमार्या सह वार्तालापार्थं गत्वा– "अहो, सुदिनम् अद्य! अत्र हितकरम् औष्ण्यम् अनुभूयते" इति उक्तवान्।

"अत्र किं, तत्र पश्यतु। इतोऽप्यधिका उष्णता तत्र अस्ति" इति राजकुमारी चुल्लीं

"नार्वेदेशस्य जानपदकथा"

प्रदर्शितवती। तत्र अयःशलाकाद्वय सम्यक् तप्तं दृश्यते स्म। एतत् दृष्टवतः ज्येष्ठस्य मुखात् किमपि न निर्गतम्। पराजितं तं तप्तायःशलाकारेखया दण्डयित्वा प्रेषितवती राजकुमारी। द्वितीयस्य अपि एषा एव गतिः जाता।

तृतीयः अपि राजकुमार्याः प्रकोष्ठं प्रविश्य "अत्र हितकरी उष्णता अनुभूयते" इति उक्तवान्।

राजकुमारी चुल्लीं प्रदर्शयन्ती– "तत्र इतोऽप्यधिका उष्णता" इति उक्तवती।

"युक्तम् एव। तस्मिन् अग्नौ एतं पक्षिणं पक्तुं शक्नुमः वयम्" इति वदन् पक्षिणं प्रदर्शितवान् सः।

"पक्षी तत्र दग्धः भवेत्" इति उक्तवती राजकुमारी। "एतस्याः रज्जोः साहाय्येन ततः पूर्वम् एव तम् अहम् उन्नयामि" इति उक्तवान् कनिष्ठः।

"तापयुक्तं तत् कथं स्वसमीपे स्थापयति?" इति पृष्टवती राजकुमारी।

"दण्डान्ते उत्तोलयामि किल?"

"तदा दग्धात् पक्षितः स्रुतं मोदोजलम् अधः पतेत् किल?"

"यथा भूमौ न पतेत् तथा घटकर्परे सङ्गृह्णामि" इति उक्तवान् कनिष्ठः।

"प्रतिवचनं वक्रतां प्रदर्शयति खलु!" इति पुनः उक्तवती राजकुमारी।

"वक्रता न वचने, अपि तु अत्र" इति वदन् मेषशृङ्गं प्रदर्शितवान् सः।

"एतादृशम् अन्यत् मया न दृष्टम् एव।"

"तर्हि अत्र पश्यतु। अपरम् अपि अस्ति" इति अन्यत् शृङ्गं प्रदर्शितवान् कनिष्ठः।

"मां पराजेतुम् इच्छता भवता आयुः वृथा व्ययितम्" इति उक्तवती राजकुमारी।

"आयुषः व्ययः न मम, अपि तु एतस्याः पादारक्षायाः" इति उक्तवान् कनिष्ठः।

अग्रे किमपि वक्तुम् अजानती राजकुमारी पराजयम् अङ्गीकृतवती। तयोः विवाहः सवैभवं सम्पन्नः। सः कनिष्ठः अर्धराज्यस्य अधिपतिः अभवत्। तस्य गृहस्य दारिद्र्यं निवृत्तम् अभवत् अपि।





# प्रत्युपकारः

२

'**वि**वाहविषये कमपि उपायं सूचयामि' इति प्रियंवदा यत् उक्तवती तत् श्रुत्वा जयः क्षणकालं मौनं स्थितवान्। अनन्तरम् आतङ्कपूर्णस्वरेण सः प्रियंवदां पृष्टवान्– "कः उपायः सः? आवयोः विवाहः शक्यः वा?" इति।

तदा प्रियंवदा मन्दस्वरेण उक्तवती– "भोः, सर्वं सुसम्पन्नं भविष्यति। चिन्ता मास्तु। अन्तःपुरतः बहिः गन्तुं कोऽपि सुरङ्गमार्गः अस्ति। तेन मार्गेण अहं बहिः आगमिष्यामि। भवान् नगरे भवतः वासस्थानं, तत्प्राप्तिमार्गं च मां सूचयतु। छद्मवेषेण अहं कथञ्चित् भवतः गृहम् आगमिष्यामि। भवान् मां प्रतीक्षमाणः तत्रैव तिष्ठतु" इति।

"अन्तःपुरे भवत्याः अनुपस्थित्या कियान् कोलाहलः उत्पद्येत इति भवती किमपि चिन्तितवती वा? किं सर्वे मौनं तिष्ठन्ति? महत् उत्पातः एव सम्भवेत्" इति उक्तवान् जयः।

"एतदर्थम् अपि मया उपायः चिन्तितः अस्ति। 'कश्चित् मान्त्रिकः आगत्य राजकुमारीम् अपहृत्य गतवान्' इति वार्तां भवान् सर्वत्र प्रसारयतु। तेन परिस्थितिः एव भिन्ना भविष्यति। खिन्नः मम पिता– 'यः मान्त्रिकतः मम पुत्रीम् आनेष्यति तस्मै एव तां दास्यामि' इति प्रकटयिष्यति इति तु निश्चितम् एव। केषाञ्चित् दिनानाम् अनन्तरं भवान् मां मम पितुः समीपं नीत्वा 'मान्त्रिकं मारयित्वा एतां रक्षितवान्' इति वदतु। एतत् सत्यम् इति अहम् अपि वदामि। तदा भवान् महावीरः इति कीर्तिं प्राप्स्यति। आवयोः विवाहः निर्विघ्नं भविष्यति च" इति उक्तवती प्रियंवदा।



जयः एतत् अङ्गीकृतवान्। "राजकुमारि! भवती यथा वदति तथा भवतु" इति उक्तवान् च।

जयस्य अङ्गीकारं प्राप्य प्रियंवदा मन्दहासं प्रकटयन्ती अन्तःपुरं प्रत्यागतवती।

'चिन्तितः उपायः कथं वा व्यवहारे आनेतव्यः?' इति सा बहुधा आलोचयति। फलप्राप्तिपर्यन्तं तस्याः मनस्तृप्तिः नास्ति।

सा सर्वप्रथमम् अन्तःपुरसम्बन्धिनः सुरङ्गमार्गस्य पूर्णं विवरणं प्राप्तुम् उद्युक्ता अभवत्। यतः सा 'एवं कश्चन मार्गः अस्ति' इति एतावदेव श्रुतवती आसीत्, न तु दृष्टवती। माता पूर्णतः विवरणं जानीयात्, किन्तु तां साक्षात् कथं वा प्रष्टुं शक्येत?

मातामहीमुखतः प्रियंवदा अन्तःगमनविषये श्रुतवती आसीत्। किन्तु अन्तः प्रविष्टं चेत् कुत्र बहिर्गमनं भवेत् इति सा न जानाति। तदपि यदि ज्ञातं स्यात् तर्हि उपायः फलितः इव!

एवं बहुधा विचिन्त्य सा तस्यां रात्रौ सुरङ्गमार्गं प्रविष्टवती एव। सुरङ्गमार्गः एषः कुत्र समाप्तिम् एष्यति इति ज्ञातुम् इच्छति स्म सा।

सुरङ्गमार्गस्य त्रीणि प्रवेशद्वाराणि आसन्। एकं द्वारं महाराजस्य मन्त्रागारप्रकोष्ठे, द्वितीयं च महाराज्ञ्याः शयनमन्दिरे, तृतीयं च राजकुमार्याः शयनप्रकोष्ठे च आसीत्। राजकुमारी यस्मिन् तल्पे शयनं करोति तस्य अधः एकं शिलाफलकम्। तस्य अपसारणेन अधः गन्तुं कश्चन सोपानमार्गः दृश्यते। प्रवेशानन्तरं शिलाफलकं यथापूर्वं स्थापयितुं शक्यते च।

प्रियंवदा एवंक्रमेण प्रवेशं कृत्वा सुरङ्गमार्गे किञ्चिद्दूरं गतवती। अन्धकारे एव अग्रे गन्तव्यम् आसीत्।

किञ्चित्कालानन्तरं अन्धकारे अपि सा किञ्चित् द्रष्टुं शक्तवती। मन्दप्रकाशे एव सा अग्रे गतवती। यावद्दूरं गतं चेदपि तया मार्गस्य अन्त्यं न दृष्टम्।

सुरङ्गस्य अन्त्यं दृष्ट्वा प्रत्यागत्य जयः सूचनीयः इति तस्याः विचारः आसीत्। किन्तु इदानीम् एतत् शक्येत वा न वा इति



तस्याः सन्देहः।

'शीघ्रातिशीघ्रम् अन्त्यं द्रष्टव्यम्' इति विचिन्त्य सा धावितुम् आरब्धवती। अल्पे एव काले निरन्तरधावनेन सा श्रान्ता। अग्रे एकं पदम् अपि स्थापयितुं न शक्नोति सा। अतः वेगेन निःश्वसन्ती सा तत्रैव उपविष्टवती। निद्रासमये मध्यरात्रे प्रस्थिता इत्यतः सा अचिरात् एव निद्रावशं गता। एवं सा कठिने सुरङ्गमार्गे एव गाढां निद्रां प्राप्तवती।

'कियत्कालं निद्रास्थितौ आसम्' इति सा न जानाति। मध्ये अकस्मात् जागरणं प्राप्य झटिति उपविष्टवती सा। परितः अन्धकारं पश्यन्ती 'कुत्र अहम् अस्मि' इति ज्ञातुं प्रयत्नं कृतवती। 'सुरङ्गे अस्मि' इति ज्ञात्वा अग्रे गन्तुम् उद्युक्ता च।

या पूर्वं मृदुले तल्पे शयने कृते अपि समीचीनां निद्रां न प्राप्नोति स्म, सा इदानीं कठिने आस्तरणरहिते शिलामये सुरङ्गमार्गे अपि गाढां निद्रां प्राप्तवती आसीत्। शिलायाः उपरि शयनं कृतम् इति कारणतः तस्याः अङ्गाङ्गेषु वेदना।

''एतावद्दूरं तु आगतम्। अग्रे किं वा करणीयम्? प्रतिगमनेन प्रयोजनं न भवेत्। एतावता सूर्योदयः जातः स्यात्। अन्तःपुरे मम अदर्शनेन महान् कोलाहलः जातः स्यात्। जयः अपि मया यथा सूचितं तथा किंवदन्तीं प्रसारितवान् स्यात् एव। अतः अग्रे गमनम् एव युक्तः मार्गः'' इति चिन्तितवती प्रियंवदा।

बलेन आत्मानं गमने प्रेरयन्ती सा अग्रे गतवती। यावद्दूरं गतं चेदपि सुरङ्गमार्गस्य अपरं पार्श्वं न प्राप्तवती सा।

तदा सा अकस्मात् मातुः वचनं स्मृतवती। माता पूर्वं कदाचित् उक्तवती आसीत् यत् सुरङ्गमार्गे गमनसमये आहारः अपि अविस्मृत्य नेतव्यः। यतः सुरङ्गमार्गस्य अतिक्रमणार्थं दिनद्वयस्य अवकाशः अपेक्षितः इति।

एतं विषयं स्मृतवत्याः प्रियंवदायाः रोदनम् एव आगतम् इव। यतः सा दिनद्वयस्य प्रयाणे उपयोक्तुम् अर्हाणि फलादीनि जलादीनि वा न आनीतवती आसीत्।

'एषः विषयः मया प्रस्थानसमये स्मर्तव्यः आसीत्। जलम् आहारं च विना तावद्दूरं गन्तुं शक्नोमि वा अहम्' इति खेदम् अनुभूतवती सा।

'इदानीं यत् प्रवृत्तं तद्विषये खेदप्रकटनेन किमपि प्रयोजनं नास्ति। जले निमग्नः शैत्यात् भीतः भवति चेत् कथम्? मातापित्रोः कुतन्त्रं विफलीकरणीयं चेत् सर्वविधम् अपि कष्टम् अनुभोक्तव्यम्। यत्किमपि भवतु, सङ्कल्पितं साधयामि एव' इति दृढं निश्चयं कृत्वा सा पिपासाबुभुक्षादिकम् अपरिगणय्य अग्रे गतवती। महतीं पादवेदनाम् अपि सा न लक्षितवती। अन्ते सा कथञ्चित् सुरङ्गस्य अन्त्यभागं प्राप्तवती एव।

मार्गे इतस्ततः विकीर्णानि वृक्षस्य मूलानि तया स्पृष्टानि। एतेन एव तया ऊहितं यत् मार्गस्य अन्त्यं प्राप्तम् इति। मूलानां मध्ये एव गच्छन्ती यदा अग्रे गतवती तदा तया उपरि गमनार्थं सोपानमार्गः प्राप्तः। प्रियंवदा तानि सोपानानि आरूढवती।

समीपे एव तया प्रकाशस्य अस्पष्टा काचित् रेखा दृष्टा। तस्यां दिशि अग्रे गत्वा यतः प्रकाशः आगच्छति तत् स्थानं हस्तेन आमृष्टवती। तदा तया कश्चन कीलः स्पृष्टः। सा तं कीलम् पार्श्वे आकृष्टवती। तेन द्वारं स्वयम् उद्घाटितम् अभवत्। वेगेन गच्छतः वायोः हितस्पर्शेन सा सन्तोषम् अनुभूतवती।

वायोः हितस्पर्शस्य सुखम् अनुभवन्ती सा बहिः आगतवती। बाह्यं परिसरम् सम्यक्



अवलोकयन्ती परितः दृष्टिं प्रसारितवती च।

अत्रान्तरे– "अहो! देवता प्रत्यक्षम् अभवत्। देवता आगता!" इति उच्चैः ध्वनिः तया श्रुतः।

सम्भ्रान्ता सा यतः ध्वनिः आगतः तस्यां दिशि झटिति दृष्टिं प्रसारितवती। विलक्षणां परिस्थितिं सम्मुखीकर्तुम् अशक्ता सा तत्रैव मूर्च्छां गता।

यत्र प्रियंवदा मूर्च्छां गता ततः समीपे एव शतानन्दवनं नाम ग्रामः आसीत्। ग्रामे ये निवसन्ति ते सर्वे महामूर्खाः। तस्मिन् ग्रामे द्वौ ज्येष्ठौ एव सर्वाधिकारिणौ। तौ यत् वदतः तदेव परमसत्यम् इति ग्रामीणानां विश्वासः। ग्रामीणानां दृष्ट्या तौ ज्येष्ठौ देवतास्वरूपिणौ। उत्सवदिनेषु ते तयोः स्तुतिं कुर्वन्तः अमूल्यानि उपायनानि समर्पयन्ति स्म।

ग्रामे यत्किमपि कष्टम् आपतत्, जनाः प्रथमं तौ ज्येष्ठौ निवेदयतः। रोगः वा भवतु, वृष्टेः अभावः वा भवतु, प्रथमं तौ निवेदनीयौ तैः।

तौ यथा न जानीतः तथा ग्रामे शुभाशुभकार्यं किमपि न प्रचलति। यदि कोऽपि तौ अनिवेद्य किमपि कुर्यात् तर्हि सः कठोरं दण्डनम् अनुभवेत्।

शतानन्दवनग्रामस्य जनानां मूर्खता एतावती अस्ति यत् – कदाचित् शङ्करनामकस्य गृहम् अग्निना स्पृष्टम्। गृहसदस्याः सर्वे भीत्याः बहिः आगतवन्तः। किन्तु कोऽपि अग्निं निवारयितुं प्रयत्नं न कृतवान्। शङ्करः 'इदानीं किं करणीयम्' इति प्रष्टुं तस्मिन् मध्यरात्रे ग्रामज्येष्ठयोः गृहं



प्रति धावितवान्।

तत्समये ग्रामज्येष्ठौ उभौ अपि गाढनिद्रायाम् आस्ताम्। तयोः जागरणे एव कश्चन कालः अतीतः। 'ज्वलन् अग्निः निर्वापणीयः' इति आदिष्टवन्तौ तौ। शङ्करः प्रत्यागत्य ग्रामज्येष्ठयोः आदेशं श्रावितवान्। अत्रान्तरे शङ्करस्य गृहं न पूर्णतः दग्धम्। किन्तु तेषां जलसेचनादिप्रयत्नतः इतरेषां गृहाणि रक्षितानि अभवन्, तावदेव।

तदा ग्रामज्येष्ठौ शङ्करम् उक्तवन्तौ— "भवता किमपि पापम् आचरितम्। तदेव पापम् अग्निरूपेण आगत्य भवतः गृहम् अदहत्। भवान् तु आवां शरणं गतः। अतः भवतः गृहसदस्याः सर्वे रक्षिताः अभवन्। आवयोः कृपादृष्टिकारणतः एव सर्वे सुरक्षितं स्थिताः। गृहं दग्धं चेत् नूतनं निर्मातुं शक्येत। प्राणाः गताः चेत् ते पुनः न आगच्छन्ति" इति।

शङ्करः एतत् अङ्गीकुर्वन् कृतज्ञतापूर्वकं पुनः पुनः तौ भक्त्या नमस्कृतवान्।

अन्यदा कदाचित् भीमसेननामकस्य पुत्रः केनचित् रोगेण पीडितः अभवत्। ग्रामसम्प्रदायानुसारं भीमसेनः स्वपुत्रं तयोः ग्रामज्येष्ठयोः समीपं नीतवान्। दुरदृष्टवशात् सः पुत्रः तत्रैव प्राणान् त्यक्तवान्।

तदा तौ ज्येष्ठौ भीमसेनम् उक्तवन्तौ— "अदृष्टशालिनः केवलं जीविताः भवन्ति। भवता किमपि पापम् आचरितम्। तत्पापं मृत्युरूपेण आगत्य भवतः पुत्रस्य प्राणान् अहरत्। पापफलानि निवारयितुं जगति कोऽपि वैद्यः न शक्नोति। आवयोः सन्निधाने भवतः पुत्रः प्राणान् त्यक्तवान् इत्यतः सः साक्षात् स्वर्गम् एव प्राप्स्यति। भवता अन्यवैद्यसमीपं गतं चेत् भवतः पुत्रः मरणानन्तरं नरकम् अगमिष्यत्" इति।

'यद्यपि पुत्रः मरणं प्राप्तवान्, तथापि सः मरणानन्तरं साक्षात् स्वर्गम् एव प्राप्तवान्' इति, दुःखे अपि शुष्कसन्तोषम् अनुभूतवान् भीमसेनः। (अनुवर्तते)



# प्रकृतिवैचित्र्याणि

## जतुकाः




प्रपञ्चे एव अत्यधिकसङ्ख्यया जतुकाः टेक्सास् प्रदेशे शान् अण्टोनियो ब्राकन् गुहायां सन्ति। ग्रीष्मकाले एतस्मिन् खाते सामान्यतः २०० मिलियन् जतुकाः एकत्रिताः भवन्ति।

## वेगगामी मीनः

मीनजातौ एव अतिवेगगामिनः मीनाः — मार्लिन्नामकाः। एते प्रतिघण्टं ४०-५० मैल् वेगेन तरणं कर्तुं शक्नुवन्ति।



## हिममयी गुहा



प्रपञ्चे एव अतिविशाला, सदा हिमेन आच्छाद्यमाना गुहा आस्ट्रियादेशे एस्रिनन् वेल्ट् प्रदेशे अस्ति। एतस्याः दैर्घ्यं २६ मैल्। एतस्याः गुहायाः मुखद्वारं ३,३०० फुट् उन्नते स्थले अस्ति। ग्रीष्मकाले अपि अत्र वातावरणं घनीभवनस्थितिम् आपन्नं दृश्यते।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अन्यथाभावः – Misunderstanding
आमृष्टवती – Groped
उष्णीषः – Head-dress
करताडनशब्दः – Clapping sound
कक्षः – Armpit
कर्तितम् – Cut
कासः – Cough
किंवदन्ती – Rumour
कीलः – Wedge
कुद्दालः – Spade
खनित्रम् – Crowbar
गणना – Account
गिलितम् – Swallowed
घटकर्परः – Potsherd
घनीभवनस्थितिः – Coagulating stage
घातः – Stroke
घृतम् – Ghee
चुल्ली – Ovan
जतुकः – Bat(flying mammal)
दहति – Burns
दुस्तरः – Insurmountable
नवजातः – New-born
पादरक्षा – Footwear
पिशुनता – Backbiting
प्रत्युत्पन्नमतिः – Ready-witted
प्रवृत्तिः – One's nature
प्राङ्गणम् – Open Ground
भागहरः – Partner
मतिभेदः – Differences of opinion
मेदोजलम् – Fat
वाचाला – Talkative (F)
वामः – Left
वृकः – Wolf
व्यञ्जनम् – Curry
शाठ्यम् – Dishonesty
शृङ्गम् – Horn(of an animal)
सुरक्षामण्डपः – Bastion
स्थाणुः – Motionless
स्थालिका – Plate
हनुः – Jaw

*　　*

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जून-८७ मासे प्रकटयिष्यामः।**





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **पुरतः फलानि – किन्तु किं फलम्?**

द्वितीयचित्रम् - **हस्ते हासहेतूनि – किन्तु क्व हासः?**

प्रेषकः– आर्. श्यामसुन्दरः, २४-३-५, श्रीरामपुरम्, भीमावरम् ५३४ २०२ (आ.प्र.)।




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# अहम् आगच्छामि

| | |
|---|---|
| I – अस्तु तर्हि, अहम् आगच्छामि। | All right then, I am going. |
| II – अये, तिष्ठतु भोः। आगमनानन्तरम् अर्धघण्टा अपि न अतीता। भवान् प्रस्थितः एव। | Wait a bit, it is not even half an hour since you came and you want to go! |
| I – आं भोः, षड्वादने स्नेहितेन सह मया अन्यत्र गन्तव्यम्। | Yes, my friend, I have to go somewhere at 6 with another friend of mine. |
| II – महापुरुषः संवृत्तः खलु भवान्! | You are a big man now, I know. |
| I – तथा नास्ति। पुनः कदाचित् आगमिष्यामि। भवान् सपत्नीकः कदा मम गृहम् आगच्छति? | Don't be silly. I will come again some other time. But when will you come home with your wife? |
| II – आगच्छावः कदाचित्। | We will come sometime. |
| I – तथा न वदतु। दिनाङ्कं निश्चित्य वदतु। आगामिनि भानुवासरे? | Don't say that. Tell me a definite date. How about next Sunday? |
| II – भानुवासरे केवलं मम विरामः। पत्न्याः तु विरामः सोमवासरे। अन्यच्च भानुवासरे अन्यः कार्यक्रमः निश्चितः अस्ति अपि। | Sunday is ofcourse a holiday for me, but for my wife it is Monday. Moreover I have someother work on Sunday. |
| I – तर्हि सोमवासरे सायम्? | What about Monday evening then? |
| II – तद्दिने मम मध्याह्ने कार्यम्। अतः प्रत्यागमनसमये एव रात्रौ दशवादनं भविष्यति। | I will be on the afternoon shift on Monday. It would be 10 in the night when I return. |
| I – तर्हि आगामिनि भानुवासरे सोमवासरे वा? | Can you make it on the following Sunday or Monday? |
| II – इदानीं तु तयोः दिनयोः कार्यक्रमः न निश्चितः। किन्तु पत्नी अपि प्रष्टव्या किल? तां पृष्ट्वा सूचयिष्यामि। | Nothing is fixed so far for those two days. But let me also find out from my wife. I will let you know after speaking to her. |
| I – तर्हि एवं करोतु। निश्चित्य श्वः परश्वः वा मम कार्यालयं प्रति दूरवाणीं करोतु। | Do this then. After you decide, give me a ring either tomorrow or the day after to my office. |